॥ अथ परिभाषेन्दुशेखरव्याख्या त्रिपथगा प्रारभ्यते ॥



त्रि० ॥ श्रीगणेशाय नमः ॥ ॥पुरांतकस्कराधिपप्रमुखसेवितं दैवतं पुरातनगिरास्तुतं कमलयासमालिंगितं ॥ चराचरविधायित
गा० त्र्यणिपनीपताम्बादरादुरःसरधराधरमवनीलधाराधरं ॥ १ ॥ श्रीवेंकटेशंपितरंसर्वतंत्रविशारदं ॥ साविंत्रीमातरंनौमिगुरून्
१ विद्यामदांस्तथा ॥ २ ॥ वितन्यते त्रिपथगा विष्णुपादाब्जसंगिनी ॥ सागरस्य प्रियाचेंदुशेखरांकविहारिणी ॥ ३ ॥ प्रारीप्सितग्रंथ
समाप्तिप्रत्यूहप्रतिबंधकदुरितोपशमाय कृतं मंगलं शिष्यशिक्षायै निबध्नाति ॥ नत्वेति ॥ नागेशइति ॥ ननु आत्मनामेतिनि
षेधादयुक्तमिदमितिचेदत्र केचित् ॥ आत्मनामेतिनिषेधो व्यावहारिकनाममात्रविषयः ॥ इदं तु यौगिकं नाम ॥ अत एव भगवान्
पतंजलिरपि गोनर्दीय आहेति तत्र तत्र यौगिकं नाम जग्राहेति ॥ तन्ननामांतरेणाव्यवहारात् व्यवहारेप्येतन्नाम्न एव प्रसिद्धेश्च
अभिवादनादौ व्यावहारिकनामोत्कीर्तनं नदोषायेति तत्त्वं ॥ कूपखानकन्यायेन समाधानं केचिदाहुः ॥ स्मृधीरिति ॥ इदं स्वस्य ग्रं
थकरणशक्त्याद्याविष्करणाय सुखमनायासः ॥ आयासेन भाष्यादितोपि बोधसंभवात् ॥ प्राचीनेति ॥ पाणिनेः ॥ ज्ञापकन्याय
सिद्धानीति पृथक् कोटिः ॥ अनेन परिभाषासूत्रव्युदासः ॥ केचित्तु प्राचीनेत्याद्येकैव कोटिः ॥ ज्ञापकन्यायेत्यत्र प्रायेणेति शेषः ॥ ते
न वाचनिकानां संग्रह इत्याहुः ॥ भाष्येति ॥ इदं द्वयोर्विशेषणं ॥ अनेन श्लिपाशपेत्यादिव्युदासः ॥ प्राचीनवैयाकरणतंत्रे वाचनिक ए०
त्वेन पाणिनीयतंत्रे ज्ञापकन्यायसिद्धत्वेन भाष्यवार्तिकयोर्निबद्धानीत्यर्थः ॥ परिभाषेति ॥ परितो व्यापृतां भाषां परिभाषां प्रचक्ष १
ते ॥ लिंगवत्त्वे सति फलवत्त्वं परिभाषात्वमिति केचित् संज्ञाशास्त्रान्यत्वे सति विध्यपेक्षितार्थविधायकत्वं तत्त्वं ॥ संज्ञा च परिभाषा चे
त्यभियुक्तोक्तावतिदेशस्य पृथगुपादानं गोबलीवर्दन्यायेनेति परे ॥ व्याख्यानतइति ॥ पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ॥

आक्षेपोथ समाधानं व्याख्यानं षड्विधं मतं ॥ एकवाक्यतयैव नियमइति ॥ यथोद्देशपक्षइति शेषः ॥ ननु उभयत्राप्येकवाक्यता
या अविशेषे कोऽनयोर्भेदः ॥ न च स्वदेशे एकवाक्यता एकत्र परत्र च विधिदेशे इति भेदः ॥ फलभेदाभावे एतस्याकिंचित्करत्वात् तद
स्तःफलभेदमाह ॥ त्रिपाद्यामपीति ॥ त्रैपादिकेन विधिनास्वसंस्कारायपरिभाषोपस्थापनात् ॥ अदृश्यपिशाचेन आकर्षण
दर्शनात् ॥ पक्षद्वयसाधारणमिति ॥ अविशेषेण प्रवृत्तेरिति भावः ॥ प्रदेशैकवाक्यताया इति ॥ सर्वशास्त्राभिज्वलनं च एकवाक्यत
या संस्कारकत्वमिति भावः ॥ इदं चिंत्यं ॥ संस्कारमात्रस्यैव ज्वलनशब्दार्थत्वे बाधकाभावेनैकवाक्यतयेति निवेशमानाभावात् स्व
देशगृहीतवाक्यार्थबोधस्य तत्र विधौ स्मृतिमात्रेण तत्तत्संस्काराभिप्रायेणैव एकदेशस्थ इत्युक्तेरुपपत्तेश्च ॥ एकवाक्यतया संस्का
रकत्वे हि अधिकारस्यापि तथात्वेन ततो विशेषाभिधित्सया तथोक्त्यसंगतिः ॥ प्रदीपदृष्टांतस्तु एवमेतत्त्वबुद्धिजननद्वा
रेसं तेन ग्रंथेन एकवाक्यतामंतरा त्वयैव योजितः ॥ स्वबुद्धिजननद्वारेति त्वदुपपादनं च एकवाक्यतायांनानुकूलं ॥ कार्यकाल
पक्षेतवाप्येवमेव वक्तव्यत्वात् ॥ न हि तवापि कार्यकालपक्षे परिभाषाणां स्वदेशे वाक्यार्थाभावः ॥ बाधकाभावात् ॥ संज्ञाशा
स्त्रस्य त्विति वक्ष्यमाणविशेषोक्त्ययोगाच्च ॥ न हि स्वबुद्धिरेकवाक्यतया बोधः ॥ किंतु स्मृतिमात्रं ॥ संस्कार्यविधीनामनेकत्वे
न युगपच्छ्रोतबुध्यनारोहेण तावतामुपस्थानासंभवाच्च ॥ प्रधानेन गुणाकर्षणेपि गुणेन प्रधानाकर्षणस्यायुक्तत्वाच्च ॥ न हि प्र
याजादिवाक्यैः पूर्णमासादिवाक्यमाकृष्यते ॥ क्ङितिचेति सूत्रस्य कैय्यटस्तु एकदेशिपक्षाशयवर्णनायप्रवृत्तः ॥ इत एवारु
च्याभाष्येऽथवेति पक्षांतरमुपन्यस्तं तत्पक्षेतु विधिप्रदेशैकवाक्यता संज्ञाशास्त्रस्य त्विति वक्ष्यमाणविशेषोक्त्याकार्यं०

कालपक्षेपरिभाषाणांस्वदेशेवाक्यार्थबोधकत्वस्यत्वदभिमतत्वसिद्धेः॥ननुअसिद्धत्वस्योभयत्राविशेषेकार्यकालपक्षेएवत्रि
पाद्यांप्रवृत्तिरितिनियमेकिंबीजं॥नचतत्रस्वदेशेवाक्यार्थबोधोबीजंपदार्थोपस्थितौतद्बोधेबाधकाभावात्॥तदेतदभिप्रेत्यो
क्तंपूर्वत्रासिद्धमितिसूत्रेभाष्येयद्यपीदंतत्रासिद्धमितिइतिचेन्न॥कार्यकालपक्षेसंस्कार्याकांक्षयैवपरिभाषाप्रवृत्तिः॥यथोद्दे
शपक्षेतुसंस्कारकाकांक्षयैवेतिनियमांगीकारात् ॥एतच्चोत्तरत्रविशेषेणनिरूपयिष्यामः॥एतावानिति॥परिभाषादेशेइति
तत्रैवेत्यर्थः॥परिकल्प्येति॥एकवाक्यताभवतीत्यर्थेसमानकर्तृकत्वाभावात्॥क्त्वानयुक्तइतिकेचित्॥विधिप्रदेशइति॥तत्रै
वेत्यर्थः॥ आद्येकार्यदेशेविधिशास्त्रस्यद्वितीयेपरिभाषायाःस्वदेशेपृथग्वाक्यार्थोबोध्यः॥वाक्यतेति॥स्वदेशेपृथग्वाक्या
र्थबोधकत्वमेकदेशस्थत्वेतंत्रमितिभावः॥उक्तपक्षद्वयस्यसंज्ञापरिभाषामात्रविषयत्वेक्ङितिचेतिनिषेधसूत्रेकार्यकालप
क्षोक्त्ययोगइत्यतआह॥निषेधवाक्यानामिति॥तत्रेति॥निषेधसूत्रेइत्यर्थः॥पर्युदासन्यायेनेति॥क्ङितिनेत्यस्यतद्भिन्नेस्या
र्थइतिभावः॥नन्वप्रथमान्तान्यसमभिव्याहृतासमस्तनञोनपर्युदासार्थकत्वंभूतलेघटोनइत्यतः भूतलभिन्नेघटइतिबोधा
भावात् इत्यरुचेराह॥प्रसज्येति॥सहयुगपत्॥विधिनिषेधयोरेकवाक्यत्वासंभवादितिभावः॥नपृथगिति॥संज्ञाशास्त्रा 
र्थबोधंविनाविधिवाक्यार्थबोधमात्रस्याप्यसंभवेनास्याकांक्षितत्वान्नस्वदेशेवाक्यार्थइत्यर्थः॥तथाचतद्देशेवाक्यार्थबोध
जनकत्वस्यतद्देशस्थत्वेतंत्रत्वेनतदभावेतदभावइतिभावः॥स्वदेशेवाक्यार्थबोधाभावस्यस्वदेशस्थत्वाभावेप्रयोजकत्वमु
पपादयति॥असिद्धत्वस्येति॥ननुशास्त्रासिद्धत्वपक्षेस्वदेशेवाक्यार्थबोधाभावेपिसंज्ञाशास्त्रस्यकुनामुत्वंसिद्धमतआह॥

कार्यार्थतयेति कार्यज्ञानंचेति॥अनुनासिकरूपकार्यज्ञानंचेत्यर्थः॥परिभाषायास्तुस्वदेशेपिपृथग्वाक्यार्थबोधेनस्वदेशेऽस्यकार्य
ज्ञानं॥तद्देशस्थत्वस्येति॥स्वदेशस्थत्वस्येत्यर्थः॥असिद्धत्वादभावात्॥तद्देशस्थस्येतिपाठेनयुक्तः॥असिद्धत्वोपपादनवैयर्थ्या
त्॥ननुपदसंज्ञाविषयेयथोद्देशपक्षस्यैवांगीकारेत्रिपाद्यामप्रवृत्तिःस्यादतआह॥पदादीति॥आहुरिति॥अन्येतुसंज्ञाशास्त्र
स्यकार्यकालपक्षेस्वदेशेवाक्यार्थबोधकत्वंनयुक्तं॥पदपदार्थोपस्थित्याचसामग्र्याःसत्वात्॥अस्याकांक्षायाःतत्प्रतिबंध
कत्वंत्वप्रामाणिकंसंज्ञापरिभाषयोःकार्यकालपक्षेस्वदेशस्थताविधिदेशस्थताच॥अतएवक्ङितिचेतिसूत्रेभाष्येकार्यका
लपक्षेतस्यांगाधिकारस्थतोक्तातत्रविधिप्रदेशस्थत्वेनपौर्वापर्यमुख्यविरोधप्रतिसंधानादेस्तत्रैवसंभवात्॥तदभावेपा
ठक्रमतमपितेनायादिभ्यःपरैवप्रगृह्यसंज्ञेत्यादिभाष्यस्यतस्मिन्नितिसूत्रस्थवक्ष्यमाणभाष्यस्यचनासंगतिः॥भादिसंज्ञा
विषयेयथो—द्देशपक्षएवेत्यपिनयुक्तं॥भस्येत्युपस्थितमिदंभवतीतिचिभमितिभाष्यासंगतेः॥एमाविस्यादाविति वक्ष्यमा
णत्वतद्ग्रंथासंगतेश्च॥किंचयथोद्देशपक्षेसंज्ञाशास्त्राणांपरिभाषाणामिवस्वदेशेविधिभिरेकवाक्यतायांत्रिपादीस्थेनतद्
भावात्तत्रसंज्ञानस्यात्॥जातशक्तिग्रहेणत्याद्यपिन॥तुल्ययुक्त्याग्रहीतपरिभाषार्थेनत्रिपादीस्थकार्यसंस्कारापत्तेः॥षष्ठी
स्थानेयोगेतिपरिभाषाया अपिशक्तिग्राहकत्वेनसंज्ञाशास्त्रसमशीलतयात्वद्रीत्यातस्याःत्रिपाद्यामप्रवृत्त्युपपत्तौतदभावापा
दनपरेणपूर्वत्रासिद्धमितिसूत्रस्थभाष्येणसहविरोधापत्तेश्चेत्याहुः॥ननुकार्यकालोयपक्षेस्त्वर्थेनकार्यदेशस्थत्वमेवार्थः संप
न्नइत्याशंक्याह॥कार्येणेति॥लिंगचिह्नितेतितदधीनप्रवृत्तिकेत्यर्थः॥अतएवेति॥काल्यतेसम्यस्वप्रवृत्तिलिंगचिह्नितपरि

त्री० भाषाणामाक्षेपइत्यर्थः पर्यवसानादेव॥एतस्य यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तमित्यनेना ̄ न्वयः॥ तावताप्यसिद्धिरित्यभिप्रा
गा० यकेइति॥संस्कार्यदृष्ट्या संस्कारकस्यासिद्धत्वेपि संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वेन संस्कारासंभवइति आशयः॥यत्र कार्य-
३ मिति॥संस्कार्यदृष्ट्या संस्कारकस्य दर्शनमात्रेण पिशाचन्यायेन संस्कारसंभवइत्याशयः॥यत्तु पूर्वत्रासिद्धमिति सूत्रे कैयटे
नोक्तं॥यद्यपीदमिति॥यथोद्देशपक्षे॥तत्त्विहसिद्धमिति॥कार्यकालं संज्ञापरिभाषमित्यस्मिन्दर्शने संज्ञापरिभाषाणाम
संतपारार्थ्यान्नस्वातंत्र्येण कार्यावगमहेतुत्वं॥केवलमाचार्येण लाघवायानेकप्रधानांगभावप्रभृति पत्त्ये पृथगुपदेशः कृ
तः ततश्चतस्मिन्निति निर्दिष्टइत्यनेन केवलेन न किंचित्क्रियते नापि झलो झलीत्यनेन किंतर्हि संहत्य कार्यं क्रियते॥ततो
झल्यनंतरे पूर्वस्य सकारस्य झलः परस्येति वाक्यार्थः॥इत्येकवाक्यतायां पौर्वापर्याभावादसिद्धत्वाभावइति तन्न॥तथास
ति पौर्वापर्याभावादिदं तत्र नासिद्धमिति वक्तव्ये तत्त्विह सिद्धमित्युक्त्यसंगतेः॥किंच स्वस्वदेशे परिभाषाविध्योर्वाक्यार्थ
बोधे पश्चात्परिभाषादृष्ट्या त्रिपाद्याः असिद्धत्वेनैकवाक्यतैव दुर्लभा॥तथाच तयोरेकवाक्यतायां पौर्वापर्याभावादसि
द्धत्वाभावः॥तस्मिंश्च सति तयोरेकवाक्यता इत्यन्योन्याश्रयः॥तस्माद्यथोक्तमेव साधु॥नचेति॥यद्यपि तत्तद्देशस्थत्वं बा गा०
रयतीत्युक्त्या नैतच्छंकोत्थितिः॥तथाप्यधिकं वक्तुमियं शंकेति न दोषः॥विधिवाक्यैकवाक्यत्वाद्वास्वदेशं विहाय पक्षि ३
वद्देशांतरगमनाद्वा प्रदेशे स्मादादिबुद्धिजननाद्वा स्वदेशत्यागः॥नाद्य इत्याह॥नहीति॥प्रदेशेषु विधिवाक्यविषये॥
स्वबुद्धिजननेन॥एकवाक्यतया स्वार्थबोधेन॥अविशेषात्॥विधिवाक्यैकवाक्यतायाः पक्षद्वयेप्यविशेषात् इतिफ

लितोर्थः॥नद्वितीय इत्याह॥नहीति॥नतृतीय इत्याह॥नापीति॥अस्मदादिबुद्धिजननेन प्रदेशे ̄ एव वाक्यैकवाक्यतये
त्यर्थः॥तद्देशे एव वाक्यार्थबोधः स्वदेशत्यागे हेतुः॥नतु तद्देशस्थैकवाक्यता॥अप्रयोजकत्वादिति भावः॥अतएवेति॥
प्रदेशे एकवाक्यतायाः स्वदेशत्यागेप्रयोजकत्वादित्यर्थः॥अन्यथेति॥तत्र स्वबुद्धिजननमात्रेण तद्देशस्थत्वे इत्यर्थः॥व
स्तुतस्तु उक्तरीत्या संज्ञापरिभाषयोः कार्यकालपक्षे प्रदेशस्थत्वमपि॥तयोस्तत्पक्षे केवलं कार्यपारतंत्र्यात्॥एकदेशस्थं।
स्य सर्वशास्त्राभिज्वालकत्वं तु यथोद्देशपक्षाभिप्रायेण॥पाणिनिपाठाभिप्रायेण वा॥यथोद्देशे च तयोः स्वदेशे कार्यैकवाक्यत्वेपि प्र
धानानुगुण्येनैव गुणानां तद्देशस्थत्व कल्पनान गुणानुरोधेन प्रधानशास्त्रस्य तद्देशस्थत्वकल्पना॥किंच गुणेन न प्रधाना
कर्षणमित्युक्तं॥तथाच तेषां परत्वं व्याहन्येतेत्याद्युक्तं॥कार्यकालशब्दोप्यत्रैव स्वारसिक इति दिक्॥अनुबंधा अनेकांताः
॥अनुबंधाः विधेयानवयवाः॥विधेये कदाप्यनुपलंभात्॥इत्यनुमाने व्यतिरेकव्याप्तिमाह॥योहीति॥यथावृक्षावयवशाखाया
अवच्छेदनात्पूर्वं तत्रोपलब्धिः॥विधेयेइति॥अनुबंधविनिर्मुक्तपदार्थोपस्थितेरिति भावः॥यद्वा बोधकानवयवत्वमेव साध्यं॥
नच हेत्वसंगतिः॥बोधकानवयवत्वे बोध्यत्वविधेयत्वयोरपि सानुबंधकेस्वरूपमिति शास्त्रेण प्राप्तिः॥केचित्तु उक्तानुमानेन बो
धकानवयवत्वमेव साध्यं॥बोध्यबोधकयोरभेदाभिप्रायेण चायं हेतुरिति वदंति॥अवयवत्वारोपेणेति॥सामीप्येन बहुव्रीह्यन.
भिधानादिति भावः॥शिवादिपदं इत्संज्ञकः शकारादिर्यस्य समीपे तद्बोध्यपरं व्याख्यानं तदिति॥द्भ्रचश्च कारेणांत्यत्वप्रयु
क्तेत्संज्ञाभाजां पूर्वोपकारकत्वं आदित्वप्रयुक्तेत्संज्ञाभाजां परोपकारकत्वमिति व्यवस्था अत्र चेत्संज्ञांशस्य तत्प्रयुक्ता तत्र चादित्व।

प्रयुक्तेतिलुव्याख्यानतोनिर्णयं॥एकांतत्वेपिपूर्वस्य परस्यवाऽवयवत्वमित्यत्रतत्वापिव्याख्यानमेवशरणंइतितात्पर्यं॥परसमीपेतिकर्म
धारयः॥एकांताइति॥बोधकस्येतिशेषः॥तथाचानुबंधाबोधकावयवाः॥बोधकेयेनसंबंधेनोपलभ्यंतेतेनसंबंधेनान्यत्रानुपल
भ्यमानत्वात्॥णितोसादीनांतद्बोध्यइत्यर्थः॥उक्तानुमानेनविधेयानवयवत्वसाधनंसिद्धसाधनं॥कल्पांतरेतुइत्संज्ञालोपाभ्याम
पहारेणसानुबंधकस्याविधेयत्वोपपत्तेरप्रयोजकोहेतुः॥अत्रत्वपशब्दादौलक्षणानाश्रयणमेवलाघवमनुकूलतर्कस्तदिदमुक्तं
॥एवंतर्हिइत्यादिना॥बोध्यबोधकयोरभेदाभिप्रायेणोक्तोहेतुरितिमतेतुविधेयतादशायांतत्रानुपलंभेपिउच्चारणदशायांतत्रो
पलंभादवयवत्वोपपत्तेरुक्तहेतुरप्रयोजकः॥एतेनसत्प्रतिपक्षेकस्याप्यसिद्धेरित्येवन्याप्यमित्यसंगतमित्यपास्तं॥कादेरिति॥
ददातीतिसूत्रेविभाषाग्रहणेननणशपोरित्संज्ञाज्ञापनेनतयोस्त्यागइतिकेचित्॥इदंचिंत्यम्॥अंतस्थशब्दवदादिशब्देपिलक्षण
येवोपपत्तेः॥किंचहलंत्यमित्येतत्सूत्राविषयेऽनुबंधविनिर्मुक्तोपस्थितेरप्रामाणिकत्वेनविधेयेकदाप्यदर्शनात् इत्यनेकांत
त्वसाधकहेतोस्तत्राभावेनणादेरेकांतत्वमेव॥केचित्तुनानुबंधकृतमित्यादिपरिभाषात्रयाकरणप्रयुक्तलाघवानुरोधेनानेकांत
इत्येवयुक्तमितिवदंति॥नानुबंधकृतमनेकाल्त्वं॥एकांतत्वइति॥विधौनिर्दिश्यमानोनेकाल्सर्वस्येतिसूत्रार्थः॥तेनानुबंध रा०
विनिर्मुक्तपदार्थोपस्थितावपिनदोषः॥लोपोपीतिमहत्तेपुनर्लोपग्रहणसामर्थ्यात् ध्वसोरितिलोपस्यसर्वादेशत्वसिद्धेर्नतदर्थ ४
मपिशिद्ग्रहणं॥असंजातविरोधन्यायेनोत्तरत्रैवालोंत्यपरिभाषाबाधसंभवात्॥वस्तुतस्तु विधीयमानोयोऽनेकाल्इत्यर्थे
पिअनुबंधानामनेकांतत्वेपिचशिद्ग्रहणंव्यर्थमेवेतिशंकायुक्तैव॥शकारोच्चारणसामर्थ्यादाद्येभूतपूर्वानेकाल्त्वमादायास्ये

ऽनेकाल्पदेगौणमुख्यसाधारणावयवत्ववतोऽन्यपदार्थत्वमाश्रित्यसर्वादेशत्वसिद्धेः॥ज्ञापकमिति॥ननुज्ञापितेपिपुनर्व्यर्थं॥श
कारोच्चारणसामर्थ्यादेवानुबंधकृतमप्यनेकाल्त्वमादायसर्वादेशत्वसिद्धेः॥नचोच्चारणसामर्थ्यादित्संज्ञालोपावपिबाध्येयातां
मितिवाच्यम्॥ज्ञापनात्पूर्वमपितयोरबाधायशिद्ग्रहणंस्यादितितस्य नवैयर्थ्यंयद्भिभूतपूर्वानेकाल्त्वमादायसर्वादेशत्वसंपा
दनेनकृतार्थस्यशकारस्यनेत्संज्ञालोपबाधकत्वंतर्हिज्ञापितेपितथेत्यवेहि॥पुरावादौतुविजातीयानेकवर्णोच्चारणसामर्थ्या
न्नेत्वं॥नाप्यस्याःप्रयोजनं॥अर्वणस्त्रसावित्यादौऋकारस्यनुमर्थत्वेनभूतपूर्वानेकाल्त्वमादायसर्वादेशाप्रवृत्तेः॥विधौयो
नेकालित्यर्थेतुनमानमितिचेन्न॥उच्चारणसामर्थ्येनभूतपूर्वानुबंधकृतानेकाल्त्वमादायापिनसर्वादेशत्वमित्यर्थस्यशिद्ग्रह
णेनज्ञापनात्॥तेनदिवऔदित्यादीनांतकारोच्चारणसामर्थ्येनभूतपूर्वगत्यानेकाल्त्वमादायनसर्वादेशत्वं॥तत्रापितपरकर
णेतुएवाव्यर्थमितितत्त्वं॥डादिविषयेत्विति॥केचित्तुअत्रानुबंधपदंतद्योग्यपरं॥अतएवकाणोविषयेनानुबंधकृतमसारूप्य
मितिविकल्पाभावः॥अनेकाल्सूत्रेशित्पदंतद्योग्यपरं॥अतएवडाआइतिप्रश्लेषेणसर्वादेशत्वमुक्तं अकारेइतिवदंति॥
अनेजंतत्वादिति॥नन्वादेचइतिसूत्रेधातोरित्यस्यनिष्टत्वात्तस्यानेजंतत्वेपिततःपूर्वमेजंतमादायात्वंसुलभम्॥नचैधाद्वा
बात्वबाधायशित्परत्वयोग्यस्यैवैजंतस्यात्वमितिपकारसत्तायांनात्वं अनेजंतत्वादित्यस्यशित्परत्वयोग्येजंतत्वाभावादित्यर्थ इ
तिवाच्यं॥यलोपोत्तरंतत्संभवात्॥कथंवानतदंतविधिः॥विशेष्याभावात्॥नचोपदेशइत्यस्यविभक्तिविपरिणामेनविशेष्यतयो
तदंतविधौसमुदायोपदेशएवक्ष्पीणांतात्पर्येणपकारसत्वेउपदिश्यमानैजंतत्वंनेत्यात्वंनेतिवाच्यं॥तथासतियलोपोत्तरमिति

त्री० पूर्वोत्तरग्रंथासंगतिरितिचेन्न॥ यलोपोत्तरं तदेवेदमितिप्रत्यभिज्ञयाएकाचइत्यादाविवोपदिश्यमानस्येजंतत्वस्यचसत्वेनादो
गा० षइत्याशयात्॥ज्ञापकमिति॥ माङोव्यतीहारेनभिधानं॥एतज्ज्ञाप्याप्रामाण्यादितिभावः॥ विस्तरइति॥ यद्यपिडञिचपदइत्य
५ त्रपदग्रहणात्॥घिसंज्ञासूत्रे नदीतरेह्रस्वापादानं परभाष्यात्स्यानिवत्सूत्रेअतिखट्वायेत्यत्रदीर्घेकृतेपि अप्राप्तौभूतपूर्वग
तिभाष्यात्चानुबंधसहितशब्दोपादानेइत्संज्ञकमदव यव स्येत्यर्थः॥ स्त्रीलिंगप्रकरणेप्येवं शब्देरत्ने॥ कयस्येत्यत्र चेत्संज्ञा
ककाद्यवयवकस्येत्यर्थइतिनयकिदोषः॥ तथापितदनाश्रित्येदमित्यदोषः॥ अभिधानियामकेति॥ तत्वंच शक्तिसंकोचकत्वं
॥तत्वंचतात्पर्यज्ञानस्यशाब्दबोधकरणत्वेतद्ग्राहकत्वंतदभावेप्रकरणसहकृतात्पदज्ञानादर्थविशेषस्येवोपस्थितत्वादर्थ
विशेषेशाब्दबोधप्रयोजकपदजन्योपस्थितिविषयतानियामकत्वंबोध्यं॥त्यंतेति॥अर्थवन्त्यंतेत्यर्थः॥तेनकतीत्यस्यसत्वे
पिनदोषः॥अकृत्रिमस्यैवेति॥सूत्रभेदेनकृत्रिमस्यैवाकृत्रिमस्यैवेत्याश्रयणेपिउभयगतिरगतैवेतिभावः॥शब्दार्थेतिहंहः॥नवो
धोपयोगीति॥यद्यपिसकलादिशब्दानांसामान्यरूपेणशक्तिग्रहादेवशाब्दबोधः॥ विशिष्यसकलज्ञानस्यासंभवात्॥तथापिहर्यादि
पदानामिव विशेषरूपेणानेकार्थबोधकस्यहर्यादिशब्दस्यविशेषरूपेणानेकेषु शक्तिग्रहएवतेषांतथाशाब्दबोधोपयोगी॥ ए०
शक्तिग्रहशाब्दबोधयोःप्रामाणप्रकारकत्वेनैव का र्यकारणभावांगीकारादितिनकश्चिद्दोषः॥ शपितेति॥त्रजंतःपाठः॥क्तांतेतु॥ ५
निष्ठाशीङ्इतिनिषेधादेवगुणसिद्धेः॥कार्यमनुभवन् यत्कार्यंप्रतियः कार्यीसततत्प्रतिनिमित्तंनेत्यर्थोबोध्यः॥ यद्यपिशयिता
अरिरिषतिइत्यादौकार्यानुभवित्वंइकारादेर्निमित्तत्वंचसमुदायस्य॥तथापिघटकतयापिनिमित्तत्वस्यनिषेधान्नदोषः॥ ॥

समवायीति॥ तत्वंचात्रकल्पितंबोध्यम्॥इदंचिंत्यं॥कालसंयोगप्रतिकालस्यादित्तनयेजगत्प्रतिब्रह्मणः तदुभयदर्शनात्॥केचित्तु
अहिष्ठकार्यस्थलेसमवायिकारणस्यनिमित्तकारणत्वंनतेन आयस्याविस्यादौएकादेशस्याचःपरस्मिन्नितिस्थानिवत्वमित्याहुः॥ध्व
निर्तेति॥ अचीत्यस्यजेघ्नीयतेदेध्मीयतेइतिप्रत्युदाहरणंअस्यांप्रतिकूलमितिनात्रैषाध्वनिता॥दायेरिति॥परिभाषासिद्धेःपूर्व
मपिदारूपस्यनिरर्थकत्वमित्याशयः॥बोध्यतइति॥घटकतयेतिशेषः॥नदारिति॥अवयवावयवइतिन्यायस्कृसमुदायावयवं
त्वेनगृहीतस्यावयवविषयकः॥प्रकृतेतुरेफस्याकारावयवत्वप्रतिपत्तिकालेनाकारस्यहशब्दावयवत्वप्रतिपत्तिरितिभावः॥च्यु
च्युलोप्शित्वमत्रज्ञापकं॥पद्माशेरलेएधिषीष्टेत्यादौरूहस्कूविधौ उद्देश्यतयापरंपरयावाआत्मनेपदलिङोग्रहणं॥दारय
तीत्यादौतुनैवं॥तद्देश्यमर्थमिति॥ननुसानुनासिकोकारार्थंतत्॥ किंत्वाम्शब्दस्यकंठोष्ठ्यतयासावर्ण्योभावः॥किंचनिर्दिश्यमानप
रिभाषयानात्रदीर्घसंभवइतिचेन्न॥आनस्यऊँ इत्यनुनासिकादेशंविधायदीर्घविधौ अकइत्यस्यपंचम्यंततांचाश्रित्यपदागम॥
न्यायेनैवसावर्ण्यमुपपाद्यवैयर्थ्योद्भावनसंभवात्॥वस्तुतःमुकिकदाचिदोकारस्याचिदीर्घस्यआहत्याऊइतिन्यासेनतदसिद्ध्या
नैतत्ज्ञापकंकिंतुयसिच्सूत्रस्योपदेशग्रहणमेवात्रज्ञापकं॥वुग्युटावितिसिद्धवचनसामर्थ्यादेवयण्नइत्यरुचेराह॥जहारेति॥
यत्तुभैरवेणोक्तंतत्कौंडिन्यन्यायेनयुटावाधितस्ययणनेतितदसंगतं॥विषयभेदेतत्कौंडिन्यन्यायाप्रवृत्तेर्वक्ष्यमाणत्वात्॥अ
सिद्धविषयेप्युक्तन्यायाप्रवृत्तेर्वक्ष्यमाणत्वाच्च॥यदागमन्यायेनलब्धस्यतपरत्वेननव्यावृत्तिरितिकृदंतशेखरे॥असंगतेति॥न
नुवक्ष्यमाणोभविष्यामीत्याद्यर्थंप्रकारांतोपदिश्यमानइत्यर्थं आवश्यकः॥ किंचहतइत्याद्यर्थंतदंतविधिरावश्यकः॥अन्यथाऽ

शे॰ द्रुपदेशात्स्वरत्वेनानुदात्तत्वापत्तेः॥तथाचनात्रवर्णग्रहणंतास्यनुदात्तइतिसूत्रेशेखरेप्येवमेवोक्तं॥एरनेकाचइत्यत्रप्रसयावयवेऽची
गा॰ त्यर्थः॥यद्वायस्योपदेशोऽदंतत्वमेवयदागमन्यायलभ्यमितिएरनेकाचइत्यत्तोऽस्यवैयर्थ्यंनचजहिशत्रुमित्याद्यर्थंप्रत्ययाप्रत्यययोर्म
६ ध्येप्रत्ययस्यैवग्रहणमितिपरिभाषाऽनुसर्तव्यातथाचतत्रएवहतइत्यादौनदोषः॥भविष्यामीत्यादौतुसमुदायोपदेशेऽवयव
स्याप्युपदेशान्नदोषइतिवाच्यं॥तदंतविध्यभावेउक्तपरिभाषयाप्रत्ययस्यैवकारस्यग्रहणापत्तावक्ष्यमाणइत्यादौदोषः
तदवस्थएवेत्यरुचेराह॥किंचेति॥बोध्यतइति॥यद्यपीदंपरिभाषांतरंतथापीदमपितद्ग्रहणेनगृह्यतइति अत्रघटकतये
ति अस्यानध्याहारेणैवतन्मूलकमेवेतिभावः॥यद्वामुम्विधानेनपूर्वस्याइवास्या अपिवर्णग्रहणेऽप्रवृत्तिरेवज्ञाप्या॥वर्णग्रहणे
पूर्वोप्रवृत्तिकल्पनामात्रेणमुम्वैयर्थ्यापरिहारात्॥इदंचिंत्यं॥आगमानामागमिधर्मवैशिष्ट्येमानाभावात्फलाभावाच्च॥प्रसु
तमिद्चोंत्यादितिसूत्रेभाष्येपराद्वित्वेहिषंतपइत्यत्रमोनुस्वारइत्यस्याप्राप्त्यापादनंविरुध्यते॥रामाणामित्यादौपदांतस्येतिण
त्वनिषेधापत्त्यातदनित्यत्वाश्रयणेमहान्क्लेशः॥पदांतभक्तः पदांतग्रहणेनग्राहिष्यतेइतिङमुट्सूत्रस्यभाष्यस्यायमर्थः॥यदाग रा॰
माइतिन्यायेनाट्कुप्वाङिति सूत्रेनस्येत्यनेनङमुट्सहितस्यैवग्रहणात्कुर्वन्नास्तेइत्यादौद्वयोर्नकारयोर्णत्वंप्राप्तंपदांतस्येत्यने ६
नवार्यते॥द्वयोर्नयोः पदांतत्वेङमोपिपदांतत्वेनतावन्मात्रस्यणत्वं॥पदांतस्येत्यत्रपदांतपर्याप्त्यधिकरणीभूतस्येत्यर्थेतुनमांनं
॥फलाभावाच्च॥नस्येत्यस्यपदांतविशेषणतयानकारपर्याप्तपदांतत्वाश्रयणत्वनिषेधान्नरामाणामित्यादौदोषः॥तत्रचवर्णग्र
हणेएवएवयदागमन्यायोभाष्याभिमतइतिदिक्॥अस्याज्ञापकमाह॥अतएवनेटिइति॥अयमर्थइति॥टितइत्यत्रबहुव्री

हिः॥आर्द्धधातुकइत्यस्यस्थानषष्ठ्यंततताश्रयणपरमाद्यंतावितिसूत्रस्थंभाष्यंत्वेकदेशिपरमितिभावः॥नत्यागइति॥आहत्या
एरुरित्यादौद्विविधोपिस्थान्यादेशभावोविवक्षितइतिभावः॥षष्ठ्यंतइति॥अंतःशब्दःसमीपवर्तिप्रकृतिवचनः॥सूत्रेषष्ठीश
ब्दःतत्प्रकृतौलाक्षणिकःनिर्दिश्यमानइति॥अध्याहारइतिभावः॥प्रत्युच्चारणंशब्दभेदात्लक्ष्यस्थस्यननिर्दिश्यमानत्वमतआह
॥सजातीयमिति॥अवयवरूपमिति॥ननुतदोरित्यादौत्यदादीनामित्यादेर्नस्थानषष्ठीत्वमितिकथंतन्नैतत्प्रवृत्तिः इतिचेदत्रन
व्याः॥तदोरितिस्थानषष्ठीबलेनोपस्थितेपाततत्रापिफलाभावाद्विशेषणेपर्यवस्यति॥इतिवदंति॥परेतुसर्वादिसूत्रस्थभाष्यतः
योग्येतरान्वितेस्वार्थेपदानांशक्तिलाभेनस्वंरूपमितिशास्त्रातिरिक्तशक्तिग्राहकशास्त्राननुसंधानकालीनोपस्थितिविषयत्व
स्यैवनिर्दिश्यमानत्वेनतदोरित्यतश्चतदंतविधितः पूर्वंत्यदाद्यवयवतदोरेवोपस्थित्यातयोरेवनिर्दिश्यमानत्वान्नातित्य
दित्यादौदोषइतिप्राहुः॥नप्रतीयमानमित्येवपाठः॥इत्यर्थइतिपाठेयुज्यतेइत्यस्यपूर्वेणान्वयः॥अयमर्थइत्यस्यचशाब्दो
र्थइत्यर्थः॥इत्यर्थइत्यस्यचार्थिकोर्थ इत्यर्थः॥धात्वादीनामिति॥येनरूपेणप्रयोगघटकतातेनरूपेणपदोपस्थाप्यत्वंनि
र्दिश्यमानत्वं॥धातुपदाच्चभ्वादीनांतेनैवरूपेणोपस्थितिरितिभावः॥स्पष्टार्थमिति॥अत्रद्वयोर्विरोधेनपरयाऽनेकालइत्य
नयाऽस्यबाधःस्यादतोङित्त्वंसफलमितिकेचित्॥विरोधादिति॥यद्यपिविसर्गस्यनोच्चार्यमाणत्वं॥तथापिपूर्वोक्तरीत्यानिर्दि
श्यमानत्वंनिर्वचनीयं॥केचित्तुस्वबोध्याघटितत्वेसतिस्वबोध्यत्वंतत्त्वंइत्याहुस्तन्न॥नचास्यच्चावित्यादिपूर्वग्रंथविरोधात्॥
भिंधकीत्यादौसाकच्कस्यहिशब्दाघटितत्वेनतत्त्वापत्त्यातदभावमतिपाटकेनद्रष्टुलभ्यइति सूत्रस्यभाष्येणविरोधाच्च॥ ७॥

त्रि० ॥दुर्दर्चिंत्यं॥वर्णग्रहणे इत्यस्याल्ग्रहणे इत्यर्थात्॥नापीति॥विधिप्रदेशे द्वयोरंगांगीभावेपि स्वातंत्र्येण द्वयोर्नसः॥तेन परस्परनैरपे
गा० क्ष्येण द्वयोः प्रवृत्तिसिद्धिः॥तत्रालोंत्यस्येत्यनेनास्याः क्वचित्सामानाधिकरण्यं॥यथाणेरनिटीत्यादौ ण्यंतांगस्यांत्यस्यालोणे रित्य
७ र्थात्॥क्वचित्वैयधिकरण्यं॥यथास्यदादीनामइत्यादौ॥तेनतानीत्यादौ नतुमः त्यदाद्यत्वं॥उदःस्थास्तंभोरिति॥अस्मिंल
क्ष्यइत्यर्थः॥सूत्रविषयइति॥उदःस्थेतिसूत्रविषयेइत्यर्थः॥उदस्थेतिसूत्रविषयेइतिपाठःसुगमः॥संचारितत्वादिति॥एतत्बा
धकयोरपि एतत्बाध्ययदागमन्यायोपजीवनेनोदस्थादित्यादौ तयोः प्रवृत्त्या एतत्बाध्यत्वमिति कैयटाशय इति परे॥अकच
विषयेइति॥साकचूकानपहारकादेशविधावित्यर्थः॥अत्रमानमनाप्य कइतिप्रतिषेधः॥फलंतु सुवकाभ्यामित्यादौ आत्त
सिद्धिः॥तदपहारके तूपतिष्ठत एवन्यायः यथाहुरुझल्यइतिसूत्रेभाष्ये भिंधकिइत्यादावकविहितत्वाभावान्नधित्वमित्याशंकि
तं॥कादेशस्त्वाहत्यापुनःविधानसामर्थ्यात साकच्कस्यापि प्रवर्तते॥अत्रेदं विचार्यते॥एषाऽर्थवद्ग्रहणपरिभाषायाः बाधिका
उतन॥नांत्यः॥लावस्थायामडितिपक्षेअपिबत् इत्यादौपिबादेशानापत्तेः॥स्यसिच्सूत्रेभाष्येआगमसन्निधानेतद्रहितस्या
र्थवत्त्वाभावोक्तेः॥नाद्यः॥एजेः पृथक् भ्राजिग्रहणवैयर्थ्यात् वानरशब्दे नरस्योरितिह्रस्वापत्तेश्च॥एवंधातुलभ्यस्यत्वाद्य रा०
पि आगमसन्निधानेतद्रहितेंगीक्रियतेनवा॥नतावदाद्यः॥स्यसिच्सूत्रस्थभाष्यविरोधात्॥किंचग्रहोलिटिइत्यत्र एकाच ७
इत्यस्यसंबंधे अग्रहीष्टामित्यत्रशेखरोक्तदीर्घाभावापादनासंगतिः॥अदरहितस्यैकाच्त्वात्॥नांत्यः॥धांतौहद्धिमटःस्मरे
दितिवार्तिकविरोधात्॥लावस्थायामडितिसिद्धांतेऽखदीत् इत्यादौअतोहलादेरितिवृद्ध्यनापत्तेः॥तत्सूत्रेतुमाङ्योगेचरिता

र्थ॥किंचाज्जसेरित्यादौ पूर्वासइत्यात्रासुकिजसः श्रीभावः स्यादित्याशंक्य निर्दिश्यमानपरिभाषयापरिहृत्य यस्त्विहिनिर्दिश्य
ते इतिपुनराशंकितं॥तच्चोक्तपक्षेऽसंगतं निर्दिश्यमानजसोऽर्थवत्त्वाभावात्॥एवं यदागमन्यायस्य वर्णग्रहणेऽप्रवृत्तौ मू
लोक्तानिदूषणानिप्रवृत्तौलण्सूत्रस्थभाष्यविरोधः॥तत्रहि परेणाण्ग्रहणे चिकीर्षतिइत्यादौ दीर्घे रपरत्वेइत्वाप्राप्तिमाशं
क्यउपधायाश्चेत्येवं भविष्यतीत्युक्तं॥त्वद्रीत्यातूक्तन्यायेन रपरत्वे ऋदंतत्वान्निर्दिश्यमानऋकारस्येत्वे रूपसिद्धेः शंकाया अ
संगतिः॥अस्तुलावर्णत्वयोरपि आगमसहिते एवसत्वेन समाधानासंगतिश्च॥अनित्यत्वादुक्तन्यायाप्रवृत्तौ इष्टस्थले प्रवृत्तेरा
वश्यकत्तयातत एव मातॄणामित्यादौ उपधायाश्चेतिइत्ववारणे तदर्थं धातुग्रहणावश्यकत्वोक्त्यसंगतिः॥किंच जहर्थेत्या
दौगुणेप्यजंतसन्निपातेनाचस्तास्वदितिसूत्रस्थं स्यसिच्सूत्रस्थं भाष्यं च विरुध्येते॥एवं निर्दिश्यमानपरिभाषायावर्णग्रह
णेऽप्रवृत्तौ मूलोक्तं दूषणम्॥प्रवृत्तौ देवदत्तार्थैस्यादाविवपचमान इत्यत्रापि निर्दिश्यमानपरिभाषयासुकोदीर्घाभावेपि वि
शिष्टस्यसवर्णदीर्घेतदुष्प्यर्थ्यमितिपूर्वग्रंथाऽसंगतिरिति॥अत्रब्रूमः॥निर्दिश्यमानपरिभाषया अर्थवत्परिभाषाबाधकत्वं
नामागमप्रवृत्तेः पूर्वमागमिनोयथाऽर्थवत्त्वं तत्तत्त्यद्बोध्यत्वादितदागमेजातेपि तथैवेतिवार्तिके धातुग्रहणसामर्थ्यात्तत्त्वेन दृ
ष्टपरं॥हलादेरितिचातोर्विशेषणं यदागमन्यायस्तु वर्णग्रहणेनप्रवर्तते॥ ।स्यसिच्सूत्रेउपदेशग्रहणात्॥पदांतत्वस्यवर्ण
मात्रवृत्तित्वाभावादेवनदोषः॥गुणादिसंज्ञारेफरहितेएव॥वर्णग्रहणेउक्तन्यायाप्रवृत्त्यासरेफस्य गुणत्वाभावेऽपिरेफस्यव
चनबोधितावयवत्वागेमानाभावेनावयवव्यवहारकांतर्यमादायाराएवेतिनियमोपपत्तेः॥एतेनरदाभ्यामितिसूत्रस्थभाष्यमपि

व्याख्यातं॥उत्सर्गसमानदेशा अपवादा इति न्यायेन निर्दिश्यमानपरिभाषापि नाल्ग्रहणे॥अतएवानुमानिकस्यान्यादेशभावे
ईवर्णीतस्यतु र्विधीयमानो नेकारमात्रस्येति दिक्॥पदन्निति॥अर्थतआंतर्यवत्तएवादेशत्वेनिर्णीते पद्दद्भिः आदेशैः।
स्वानुरूपस्यान्याक्षेपसिद्धिर्नान्यथेतिभावः॥समानवर्णइति॥तत्फलंतुचरणस्यनपदादेशः॥तस्यतस्मिन्नपुंसकत्वापत्तिः॥
कल्पितान्वयेति॥अन्वयव्यतिरेकौ यत्तत्वे यत्तत्वं पदभावे यद्भावो तौ च प्रकृतिमत्ययादि॥कल्प्यितावेवेतिभावः॥वर्ण
ग्रहणेष्विति॥अत्रमानं नेदमदसोरकोरिति सूत्रेऽकोरितिप्रतिषेधः॥सुखमिवेति॥शाखादिभ्योयः॥निपातपदमिति॥ननुचा
दीनांतथोपस्थित्याउपतिष्ठतांनामतद्दोषः॥च्व्यंतस्यतुनतथेतिकथंतत्र विशिष्टरूपोपादानं॥किंच प्रकृतावारोपेण वर्तमाना
देवच्विविधानेनतस्यनमुख्यगौण्यार्थौसंभवतः॥किंचैवंनिपातोद्देश्यककार्यमात्रे च्व्यंतस्याग्रहणापत्तिरितिचेदत्र केचित्॥
चाद्यंशे विशिष्टरूपोपादानमात्रेण प्रवृत्तापरिभाषांऽशांतरमनुगृण्हाति॥कार्यांतरेत्वनित्यत्वादस्याप्रवृत्तिरिति भावः॥देवताद्वं
द्वेति॥असंतसहचरितेलोकविज्ञाते द्वंद्वमित्युपसंख्यानं इति वार्तिकनिष्पन्नस्यात्रग्रहणं॥ओत्सूत्रस्थं कौस्तुभोक्तं दूषणंपरि एॱ
हरति॥गांपाठयेति॥अस्य पदकार्यविषयत्वेम्नूद्वाचेति सूत्रे जातिग्रहणमपिलिंगं॥ननुकिमिदंपदकार्यत्वं॥नतावत्पदो ८
द्देश्यकत्वं॥तद्धितविधावनुपस्थानापत्तेः॥तेषां वस्तुतःकृवंतात्प्रवृत्तावपितदनुद्देश्यकत्वात्॥नापिवस्तुतःपदसंबंधित्वंणि
त्वस्यापितथात्वात्॥त्वङ्कतइत्यादौत्वाद्यादेशानापत्तिश्च॥नापिप्रत्ययानिमित्तकत्वं तत्"हरितादिभ्योऽञ् इत्यस्यापितथात्वेन
तत्रैवतस्याप्रवृत्तौ गोणेभ्योपितेभ्यः फगापत्तिरितिचेन्न॥अंगसंज्ञाऽनिमित्तकत्वेसति वस्तुतःपदसंबंधिकार्यत्वंतत्वमिति

नकश्चिद्दोषः॥अंगग्रहणाच्चेति॥इणइत्यस्य षष्ठ्यमादिविशेषणत्वेनबुबुधिध्वेइत्यादौनदोषइतिभावः॥परस्परेति॥एकेनयो
गेनसंबंधेन निर्दिष्टानामितिविग्रहः॥अत्रचज्ञापकं रुवामंत्रितइत्यतः रुविपत्यनुवर्तमानेरुप्प्रतिनेत्यत्र पुनःसुपग्रहणं॥अ
संबंधार्थमिति॥संबंधशंकावारणार्थमित्यर्थः॥तावन्मात्रांशइति॥यस्तुतःसंख्यापदेस्वरितत्वंप्रतिज्ञायपुनरादिपदेतत्
प्रतिज्ञानमेतन्मूलकं॥केचिदादिमंपरित्यज्यांतिमेनप्रतिज्ञातं॥सामर्थ्यादिति॥योगविभागसामर्थ्यादित्यर्थः॥ज्ञापयती
ति॥स्थालीपुलाकन्यायेन सूचयतीत्यर्थः॥ज्ञापकमिति॥ननुज्ञापितेपिव्यर्थलोपेनसिद्धेः अकारविधानसामर्थ्याद्दी।
र्घरूपसिद्धेरितिचेन्न॥लोपेसत्यकृत्सार्वेतिदीर्घापत्तेः॥ द्विवडदिति॥च्छ्वोःशूडित्यत्रकिन्नद्ग्रहणा ननुवृत्तिपक्षमाश्रित्येदंत
दनुवृत्तिपक्षेआह॥ऋतउदिति॥नन्वेवंकुदुपधायाइत्येवसिद्धे दीर्घोच्चारणंव्यर्थमितिचेन्न॥गुहेण्यंताच्चडि उपधाकार्य
यैसपद्धित्वात्प्रावल्येनगुणेऊत्वेणौचङीतिह्रस्वाप्रवृत्त्यर्थत्वात्॥कुरुतइत्यत्रउदितितपरत्वेनगुणाप्रवृत्तिवत्॥अतएव
ऊदुपधायागोहइति सूत्रेऊऊ इतिप्रश्लेषेणगोहइतिविकृतनिर्देशोभाष्यकृतामत्याख्यातःअजुगूहदित्यर्थंप्रश्लेषस्यावश्यक
त्वात्॥नचोत्वहत्ष्याणौचङीतिह्रस्वस्यवहिरंगतयाऽसिद्धत्वेनबाधासंभवइतिवाच्यं॥ऊदितिदीर्घोच्चारणसामर्थ्येनउक्तभाष्य
बलेनचबहिरंगस्याप्युपधात्वनिमित्तकह्रस्वस्यबाधकल्पनात्॥प्रत्ययस्येतरविशेषणत्वेति॥वर्णविशेषणत्वइत्यर्थः॥स्फु
टमेतदिति॥पाणिनेस्त्वित्यादि॥देवादेरिति॥ततश्चरूपोधात्वितिलुगापत्तिरितिभावः॥शब्दस्वरूपमिति॥केचित्तुतदादेरित्यंश
स्यविशेष्यतयातदंतविधिरित्याहुः॥अंशमात्रेति॥तदंतांशस्तुनोपतिष्ठते॥लेखग्रहणेनसामान्यतएवसप्तम्यंततयोपात्तेमत्य

त्रि० येतदंतविध्यभावकल्पनात्॥ तेन रूपिचेत्यादौ न तदंतविधिः॥ तत्र तदाद्यंशोपस्थितिफलं तु सुपूर्दद्देवदत्ताभ्यां इत्यादौ सात्पदाद्यो
गा० रिति निषेधाभावः कथंचित् फलं बोध्यं॥ एवमिति॥ प्रत्ययग्रहणे चेति निषेधस्तु तदंतांशमात्रस्येति भावः॥ एङंतादिति॥ नन्वेवम
९ पिकतरदित्यादावतिप्रसंगस्तदवस्थः॥ तदादित्वस्य प्रत्ययावयवाकारेंऽतेपि सत्त्वादिति चेन्न॥ तत्र तदाद्यंशोपस्थितिसामर्
थ्येन संबुद्ध्यवयवाघटितस्यैव तदादेर्ग्रहणात्॥ अंगसंज्ञायां प्रत्ययावयवाघटितस्यैव तदादेर्ग्रहणेनात्रापि तादृशस्यैव ग्रही
तुमुचितत्वात्॥ न विशिष्टादिति॥ विशिष्टस्य तु अर्थवत्सूत्रेण प्रातिपदिकत्वं॥ समासग्रहणकृतनियमस्तु न॥ राजपुरुषावि
त्यादौ पुरुषावित्यादेरिव गार्ग्यायणस्यानर्थकत्वेनार्थवदंतर्भावाभावात्॥ नियमस्य सजातीयापेक्षत्वेन परस्परसमानाधि
करणवृत्तिद्वयाश्रयाघटितएव प्रवृत्तेः राज्ञः कुमारीं श्रित इति युगपत्वृत्तिद्वयकल्पनयापि प्रातिपदिकत्वं समुदायस्य फलभं
अत्र समासत्वमप्युक्तत्वं न वयवस्य यद्यपि प्रातिपदिकत्वं कृत्तद्धितेति सूत्रेणास्ति" तथापि सुबुत्पत्तिः समुदायादेव॥ एका
चूद्विर्वचनन्यायात्॥ प्रत्ययमात्रे इति॥ तत्फलं तु उगितश्च त्यस्य प्राचीत्यादौ प्रवृत्तिः॥ अन्यथा उगित् यस्माद्विहितः तदादेरे
वाभावात्॥ तत्र तदापत्तिः॥ ननु प्रतीषिषतीत्यत्राभ्यासात्परस्याङ्ङ्नेति दीर्घवारणायोत्तरखंडे प्रत्ययत्वाभावस्य शब्देन्दु ग०
शेखरे उक्तत्वेन सन्वत्वस्य प्रत्ययाप्रत्ययसाधारण्येन सनाद्यंतादित्यत्र कथमेतदुपस्थितिरिति चेन्न॥ प्रत्ययमात्रग्रहणे इत्यस्य ९
प्रत्ययधातूभयसाधारणरूपग्रहणात् इत्यर्थेनादोषात्॥ यद्वा सन्त्वस्य प्रत्ययाप्रत्ययसाधारण्येपि सनाद्यंता इत्यत्र प्रत्ययाधि
कारस्यैवग्रहणेनादोषात्॥ वस्तुतः द्विर्वचनेसन् प्रत्ययत्वादिसमुदाये एव नोत्तरखंडे इति सन्त्वं प्रत्ययमात्रवृत्ति॥ अतएव

रुविनिरुदुभ्य इति सूत्रे कैयटेन विवुबुषुः इत्यत्र समुदायस्यैव रूपित्वमुक्तं॥ इपतेरिति सूत्रस्थभाष्यं तु सागमकस्यैव साभ्या
सस्य निर्दिश्यमानत्वाभावे न उत्तरखंडस्यैव तत्त्वेनोपपन्नं॥ अतएव भ्रस्जो रिति सूत्रे भाष्ये बरीभृज्ज्यते इत्यत्र रीकारे फस्य लोपा
माशंक्योपदेश इत्यनुवृत्त्या समाहितं॥ अतएवोर्णुनुवतुरित्यादौ द्वित्वे उवङ्॥ अनुषस्यंद इत्यत्रानुविपर्यभिनिभ्य इति षत्वं
धत्ते इत्यत्र दधस्तथोरिति भष्भावः॥ प्रतीषिषतीत्यत्राभ्यासस्य दीर्घाभावश्च सिद्धः॥ स्यादिष्विति सूत्रे नव्योक्तं सुनोत्याद्यव
यवस्यैव तत्त्वं ध्यवयवस्यापि षत्वस्यर्थत्वं॥ यद्वात्र प्रकरणे तत्तद्धातोरिव तत्तदानुपूर्वीकस्यापि ग्रहणमित्यादि तु स्वरूपव्या
क्रियैव पराकृतं॥ प्रतीषिषतीति॥ इत्यत्रोत्तरखंडे स्यप्रत्ययाधिकारस्यत्वाभावे चैउत्तरखंडस्य तनादि शेषेस्तोक्तं धातुत्व
मपि न स्यात्॥ भ्वादित्वाभावात्॥ ननु उत्तरखंडस्य प्रत्ययत्वाद्यनंगीकारे प्रतीषिषति इत्यत्र कथं सन्यत इत्तिइत्वमिति चेन्न॥
सन्यत इत्यत्र सनीत्यस्य निमित्तसप्तमीत्वेन सन्निमित्ताभ्यासस्येत्यर्थेनादोषात्॥ प्रत्ययाच्च समभिव्याहारे तु अङ्ङ्नेति दीर्घे
णई षिषतीत्येव साधु॥ आटिटदित्यादौ णिलोपस्तु ण्यंतांगस्यांत्यस्य ल इत्यर्थेन फलभः॥ एवं च पूर्वधातुः साधनेनेति सि
द्धांते द्वित्वोत्तरं नेर्विश इत्यादीनां प्रवृत्तिः साधुः संगच्छत इति दिक्॥ यत्रेति॥ अपंचम्या इति प्रसज्यप्रतिषेध इति भावः॥ एं
कार्यांतरविधानायेति स्वरूपकथनं॥ धातुतकारस्येति॥ स्वं रूपं शास्त्रातिरिक्तसंज्ञा शास्त्रं विनोपस्थाप्यत्वं निर्दिश्यमान
त्वमिति नात्र सोपतिष्ठते॥ अतएव रदाभ्यामिति सूत्रे भाष्ये रदाभ्यामिति किमर्थं चरितं मुदितं॥ ननु रदाभ्यामित्युच्यमाने
प्यत्र प्राप्नोति॥ न रदाभ्यां निष्ठा विशेष्यते किं तर्हि तकारो विशेष्यत इत्युक्तं॥ अन्यथा निर्दिश्यमाननिष्ठायाः फदाभ्यां पर

त्रि० त्वाभावेनातिप्रसंगवारणेन तदसंगतिः सूत्रे तग्रहणमप्युक्तार्थ एव सफलं नान्यथेति दिक्॥ एकविषयत्वमिति॥ तदादितदं
गा० तांशयोः सामानाधिकरण्येनान्वय इत्यर्थः॥ ननु स्यतासी इत्यत्र धातोरित्यस्य स्यतासिभ्यामेवान्वये नतयोः कार्यांतरविधाना
१० यानाश्रयणात्॥ तदंतविधिर्दुर्वार अत आह॥ स्यतासीति॥ यद्यत्र धातोरित्यस्य स्यतासिभ्यामेवान्वये नलुलुटोः पंचम्यंतात्परत्वेना
ऽनाश्रयणात्॥ तदंतविधिर्दुर्वार इत आह॥ स्यतासीति ड्या वृभ्य इत्यादाविति॥ ड्या वंशे तदंतविध्यनापत्तिरूपो दोष इत्यर्थः॥ विशे
षणत्वाभावादिति शेषः॥ उत्तमैकाभ्यामिति॥ सुपि चेत्यस्य सुवंत इत्यर्थे तन्निर्देशासंगतिरिति भावः॥ परे त्वेवं सति घरूपेत्यत्रापि तदंत
विध्यभावोपपत्तौ उत्तरपदाधिकारे प्रत्ययग्रहणमित्युत्तरपरिभाषावैयर्थ्यं तस्मादयुक्तमेतदित्याहुः॥ कुमारी ब्राह्मणीरूपेति॥ स्थि
तप्रदर्शनमेतत्॥ अन्यथा पुंवद्भावेनोक्तरूपस्य दुर्लभत्वात्॥ उत्तरपदेति॥ परे तु लेख ग्रहणेन सप्तम्यंततया प्रत्ययग्रहणेन तदंत
ग्रहणं इत्येव ज्ञाप्यते॥ उत्तरपदाधिकार इति विशेषणे प्रयोजनाभावात्॥ तेन सुपि चेत्यादौ न दोषः॥ अत्रेः कृतिङ उपसर्गस्य घञीत्यादौ
तु सामर्थ्यात् तदंतविधिरित्याहुः॥ २५॥ २६॥ २७॥ इत्यत्रैवेति॥ पुस्तकांतरे एतदग्रे इत्याशय इति पाठस्तत्सिद्ध्यर्थे तदंतविधिद्वयस्वी
कार इति शेषः॥ केचित्तु स्त्रीप्रत्यये तदादिनियमो न। उपसर्जने तु सोऽस्ति इत्यं शब्द्वयवती परिभाषा। तत्रोत्तरांशस्येदमवतरणमित्या गा०
हुः॥ पदात्परत्वाभावेन चेति॥ पदादित्यस्य कुत्सने च सुपीत्यतः प्रागनिवृत्तेरयुक्तमेतत्॥ कृत्स्वरेणेति॥ नन्वनंतरग्रहणस्यादोः पूर्व १०
पदत्वेपि स्वरार्थत्वे उक्तपरिभाषाज्ञापकत्वासंभवेन तस्या एवाभावे कथमेतत्॥ उद्धृतशब्दस्याकृत्तदंतत्वात् न च वनोरचेत्यादावि
व तदंतविधिद्वयांगीकारादेतदुपपत्तिरितिवाच्यं॥ एवमेवोपपत्तौ उक्तपरिभाषावैयर्थ्यापत्तेः॥ गतिकारके तरपूर्वस्यापि स्वरा

पत्तेश्चेति चेन्न॥ गतिरित्यस्यैवानुवृत्त्या पुनर्विधानेनोदोः पूर्वपदत्वेपि स्वरसिध्यानंतरग्रहणस्याव्यवहितव्यावृत्त्यर्थत्वे निश्चिते तेनो
क्तपरिभाषायां ज्ञापितायां तामंगीकृत्य कृत्स्वरेणोदात्तत्वस्य साधनात्॥ यद्वानंतरग्रहणस्य प्राचीनपरिभाषाज्ञापनपूर्वकं कार
कादेव परमित्युक्तनियमेनाभ्युद्धृतमित्यादौ दः स्वरप्रयोजनकत्वे अनेकप्रयोजनकत्वसिद्ध्या तत्परित्यागेनापूर्वपदस्वरमात्र
प्रयोजकत्वस्यान्याय्यत्वेन पूर्वकल्पस्यैवाश्रयणमित्याशयः॥ अथवानंतरग्रहणेन परिभाषायां ज्ञापितायामभ्युद्धृतमित्यत्रोदः
स्वरश्रवणसिद्धेः। कारकादिति योगविभागेनापि संभव इत्याशयः॥ अपूर्वपदत्वेपि स्वरप्रवृत्तिरूपफलस्य परिभाषाज्ञापनो
त्तरकालिकेन कारकादिति योगविभागेन सिध्यानंतरग्रहणफलत्वाभावनिश्चयात्॥ ज्ञापनोत्तरस्वस्मिन्चारितार्थ्यमात्रेण।
ज्ञापकत्वसंभवात्॥ तदेतदभिप्रेत्य वक्ष्यति व्यवहितनिवृत्त्यर्थमेवेति॥ परत्वादिति॥ उत्कृष्टत्वादपवादत्वादिति यावत्॥ यद्वा
कृत्ग्रहणपरिभाषायाः अवकाशः व्यावलेखी व्यावचर्चिइति णचस्त्रियामिति गतिपूर्वस्यापि णजंतत्वात् अत्र सति हि द्विस्वरौ
भवतः॥ अत्र हि प्रत्ययग्रहणपरिभाषा स्त्रीप्रत्यये चानुपसर्जने नेति निषेधान्नोपतिष्ठते॰ न चात्र कृद्ग्रहणपरिभाषायाः फलाभा
वः अधिकव्यवच्छेदार्थत्वात्तस्य स्पष्टं चेदं समासे नञ्पूर्वे तिसूत्रे भाष्यकैयटयोः॥ अत एवेति॥ उक्तार्थकरणादेवेत्यर्थः॥ परिभा
षाभ्यामिति॰ ननु गतिकारकोपपदानां इत्यस्य किमत्र कृत्यमिति चेन्न॰ संपूर्वात्कूटेरभिविधौ भावइनुणित्यनेन इनुणि कूटि।
न्नित्यस्मात् प्राप्त समासार्थ विभक्तिं बाधित्वा स्वार्थिकत्वेनांतरंगत्वात्॥ अणिनुण इत्यनेन अण्प्रत्यये उकारस्य वृद्ध्यापत्तिः प्रा
प्नुतुस्तेः॥ समासे अंतरंगत्वात् पूर्वं समासः॥ अण्प्रत्ययो हि प्रातिपदिकविशेषापेक्षत्वाद्बहिरंगः॥ अत्र संकूटिनित्यस्मात्।

त्रि० मासप्रातिपदिकादण्प्रत्ययेसतीष्टं सिध्यति॥अन्यथेति॥उक्तार्थमनंगीकृत्यगत्यादिसमवधानेपिकेवलस्यग्रहणे॰केवलस्यक्तांतत्वे
गा० नेति॰ननुगतिरनंतरइत्यत्रउक्तपरिभाषयागत्यादिपूर्वकस्यैवग्रहणेसूत्रस्योक्तिसंभवाभावः॥गतेः क्तांतपरत्वासंभवात्सामर्थ्यादुक्त
११ परिभाषायाः अप्रवृत्तौ अस्युद्धतमित्यादौ अभेः केवलक्तांतपरत्वाभावात् एवस्वरप्रवृत्तौज्ञापितेप्यनंतरग्रहणवैयर्थ्यमितिचेन्न॰
यस्यगतेःप्रकृतिस्वरकार्यःतस्यैवसामर्थ्येनक्तांताप्रवेशकल्पनात्॥ननुकृद्ग्रहणेगतिपूर्वस्यग्रहणंज्ञाप्यतांकारकपूर्वस्यकथं
ज्ञाप्यते॰उच्यते॰एकदेशानुमत्याप्राचीनपठितपरिभाषाज्ञापनात्॥यद्वाहीनेतिसूत्रेनुपसर्गग्रहणंज्ञापकम्॰इयंगतिरनंतर
इतिसूत्रेभाष्येस्पष्टा ॥२७॥अतएवेति॥परमातिमहानित्यादौदीर्घस्येष्टत्वादेवेत्यर्थः॥२८॥असाधुत्वमिति॥तस्यत्वेतिपा
ठमनाश्रित्येदं॰तदाश्रयणेतुकुरुतइत्यादिबोध्यं॥तेनतुल्यमिति॥आर्थिकार्थकथनमेतत्॥वतिस्तुसप्तम्यंतात्॥उपमेयेसप्त
मीदर्शनात्॥हरिश्चिति॥ननुहरीत्यादौइदंतत्वव्यपदेशभावःस्वसमुदायस्यसत्वेनससहायत्वात्कथमत्रसः॥द्विवचनत्वसमा
नाधिकरणभेदंतत्वंनमुख्यमन्यत्रेतिचेत्॥हरिषिस्यत्रापिसुपत्वसमानाधिकरणंसुवंतत्वमपिमुख्यंनान्यत्रेतितुल्यम्॥अ
थद्विवचनवत्सुपविशेष्यतयानोपातइतिचेत्॥तथापिभवतीत्यादौभूइत्यस्यकथमंगत्वं॥अंगसंज्ञायांसामान्यतःप्रत्ययइत्यु रा०
क्तत्वेनतिपोपिग्रहणसंभवेनतमादायमुख्यतदादिसंभवेनससहायत्वात्॥अथप्रत्ययपदेनशपोग्रहणेऽसहायत्वमितिचेद ११
त्रापि शब्दस्वरूपविशेष्येणसुपएवग्रहणेऽसाहायत्वमितिचेन्न॥शब्दस्वरूपस्यसमुदायावयवसाधारण्येनतद्विशिष्टस्यसुवंत
स्यसत्वेनससहायत्वात्॥प्रत्ययत्वस्यतुप्रत्येकंपर्याप्ततयाततत्व्यक्तेरेवग्राह्यतयाशपोग्रहणेऽसाहायत्वमितिवैषम्यात्॥कार्य

कालपक्षइति॥यथोद्देशेतुस्थानिवत्वेनैवप्रातिपदिकत्वसिद्धिरितिभावः॥इदमुपलक्षणंइशब्दात्पञ्जिजोश्चेति फक्सिद्धिश्चे
तिबोध्यम्॰शिलापुत्रकस्येति॰वर्तुलाहृषत्॰अनेनचातिदेशेनाधाराधेयभावअवयवत्वतद्व्याप्या एवधर्मातिदिश्यं तेना
न्येतितेनप्रस्लनय्येत्यादावन्नोपस्यासिद्धत्वात्॥ल्यपिलघुपूर्वादित्ययनस्यात्॰इत्यर्थकेनासिद्धवत्सूत्रस्यभाष्येणनविरोधः
लोके॰दर्शनेनपूर्वोच्चारितत्वस्यानतिदेश्यात्॥अपर्यालोचनयेति॥परेतुधात्ववयवस्यैकाचःप्रथमस्यद्वेस्तइतिहिद्वित्वंवि
धावुपात्तं॰तत्रनिजौनेततन्नितयोपेतुकिंचिदित्यसहायतेव॥यथाहरी इत्यादौइदंतत्वद्विवचनाभावेनसा॰तथाचनिजिति
समुदायस्यैकाच्त्वेपिनधात्ववयत्वंइकारस्यधात्ववयवत्वेपिनैकाच्त्वं॰निशब्देइजशब्देतयोःसतोरपिनप्रथमत्वमित्य
सहायतासुस्थैवेत्याहुः ३० अतएवेति॰प्रसपांशानुवादत्वादेवेत्यर्थः॥तद्रूपेणेति॥उगिदूर्णान्यरूपेणेत्यर्थः॥तेनाहृद्धा।
भ्यःन्नरध्यंधकेत्यादौनतदंतविधिः॥चरितार्थमिति॥मठःप्रत्ययत्वमाश्रित्येदं॥पतितेषुद्विजातीषुप्रविशत्यंततोधरः॥संप्र
विष्टेषुतदनुजायतेवर्णसंकरः॥१॥तेनाहन्निति॥वस्तुतःसूत्रेपातांतादिशब्दएवैषा॰अन्यथारेणीत्यादीनांवनोरचेत्यादी
नांचकेवलेअप्रवृत्त्यापत्तेः॥एतदर्थंतदंतविधौतस्यचेतिपाठेगौरवंनिष्कृष्येकार्थीभावाद्यभावेपितद्धितस्त्रीप्रत्यययोःप्रवृ।
त्याजकरोणेतथापाठेअवयवादपितद्धितापत्तिश्चेतिदिक् अपवादोयमिति।तेनसमानाधिकरण्येनविशेषणविशेष्यभा
वएवैषा॰तेनेषुगमीसन्नएतदप्रवृत्त्याइषाणेत्यत्रनछत्वं॥वाचनिकेति॥यत्तुनल्यपीतिज्ञापकसिद्धेषेतिपाठकेनोक्तम्
तन्न॰प्रदापत्त्नप्रमित्यत्रतविइत्ववारणार्थत्वात्॥ननुव्हिरंगतेनवकोसिद्धत्वं॥नाजानंतर्येबहिष्ट्वप्रक्लृप्तिरितिनिषेधा।

त्रि० त्॥स्वरूपेसतीति॥नतुतदर्थोपीत्यर्थः॥निरूपितमिति॥तत्रहिएवमुक्तं॥बलादेरित्यनुवृत्तविशेषणंबल्यदार्थस्यतकारेणविशेष
गा० णात्॥तकाररूपबलादेरित्यर्थंइतिपरेतु आदिग्रहणाभावेवलिपरे आर्धधातुकस्येडित्यर्थापत्तिः॥विजातीयविभक्त्युच्चारणेवै
१२ यधिकरण्येनान्वयस्योत्सर्गिकत्वात्॥तीषसहेत्यादौरुषरिषइतिपंचम्यांतीतिसप्तम्याषष्ठ्यर्थनिर्णयेनरावणंतत्वणायमन्येश्रीराम
इत्यादाविवसामानाधिकरण्येनान्वयः॥तीत्यस्यवलिविशेषणत्वंत्वयुक्तमितिस्पष्टमेव॥ङःसीत्यादौतुसीत्यस्यपदस्येत्यनेनसामा
नाधिकरण्येनान्वयेत्वदुक्तरीत्यातदादिविधिभावेपितदंतेविध्यापत्यानिष्टप्रसंगेनतद्वारणायनलोपसूत्रेभाष्योक्तस्योत्सर्गिकस्यप
दस्येत्यस्यवैयधिकरण्येनान्वयस्वीकारेततएवतदादिविधेरभावेनादोषादित्याहुः॥तद्धिइति॥द्वंद्वश्चेत्यत्रैषामेवसमाहारइतिनि
यमेएकवचनस्यदोर्लभ्यात्तद्वैयर्थ्यमितिभावः॥तदेतद्ध्वनयति॥अतएवद्वंद्वश्चेति॥द्विवचनव्यावृत्त्यर्थंतुनततित्यएकातारापुनर्व
सूद्वंद्वेतारेइत्याकरात्॰तद्वैकल्पिकइति॰केचित्तुक्षीरोदकेइतिभाष्यप्रयोगात्॥जातिप्राधान्यएवेदमित्याहुः॥नन्वेकशेषेणबहुव
चनसंभवात् जातिरप्राणिनामित्यस्यानुवादकतयातन्निवर्तनासामर्थ्यादितिचेन्न॥तिष्यपुनर्वस्वोःसमुदायस्यानेकत्वाभावात्॥युगभे
देनतद्भेदकल्पनस्यातथाप्रयोगेतुनदृढतरमानंइत्याशयात्॥कार्यकालपक्षेइति॥आकडारीयसंज्ञासुयथोद्देशपक्षएवेति॥पूर्व ए०
ग्रंथेनेदंविरुणद्धिइतिकेचित्॥एतदुदाहरणं॥चकारेति॥अत्रहिउरदित्यत्वेहलादित्यत्वेहलादिः शेषेसिद्धिः॥आनुमानिकस्या १२
न्यादेशाभावमाश्रित्यतुननिर्वाहः॥अभ्यासस्यनिरर्थकत्वात्॰नचस्थानिवत्सूत्रेशेखरेआरेत्यादाविवपुनरभ्याससंज्ञा॰तथास्तुत
रसूत्रेऽनवयवत्वेवत्रेसत्रभाष्योक्तस्यस्वेनापितथानुदितस्यासंगत्यापत्याद्विरुच्चारणविषयस्यपूर्वस्यैवग्रहणात्॥अधिकंशब्दें

दुशेखरव्याख्यायांबोध्यं॥नन्वनन्यशब्दाद्दत्तिनातिदेशोयमितिमतीयतेतत्तुनयुक्तं॥भेदएवातिदेशांगीकारात्इतिअतआह॥अ
नन्यवदिति॥आदेशग्रहणमूलकोयमितिदीक्षितोक्तं खंडयति॥लोकेति ॥अतएवेति॥लोकन्यायसिद्धत्वादेवेत्यर्थः॥शब्दै
कदेशइति॥अत्रहिअर्थस्यैवावधित्वंएष्टव्यं॥अर्थानामेवावधिमत्वस्येष्टत्वेसजातीयानामेवावध्यवधिमद्भावस्यप्रसिद्धत्वात्॥
तेनप्राक्कीताच्छइत्यस्यनासमासइत्यादौसंबंधः॥अनुकरणत्वंचनशब्दस्वरूपार्थकत्वं॥शब्दस्यैवावधित्वमित्यापत्तेः॥किंतुतत्ते
नमत्यभिन्नेयपर॰अतएवप्राग्दीव्यतीत्यत्रभाष्येदीव्यतिशब्देदीव्यत् शब्दोस्तितस्मादेषापंचमीत्युक्तं॥तथाचैकदेशविकृतस्या
नन्यत्वाद्दीव्यतिशब्दोदीव्यस्यर्थइत्यर्थस्यावधित्वमित्युक्तेत्यंतस्यतात्पर्यंकिमर्थमिति॥दीव्यतेरित्यनुक्त्वाकुतइयंवक्रगतिरिति
प्रश्नार्थः॥ज्ञापयतीतिबोधयतीत्यर्थोत्रविवक्षितनार्थापत्तिः॥अक्तपरिमाणेति॥परिच्छिन्नपरिमाणेत्यर्थः॥यथाजरयाइत्यादौनन्व
नेनन्यायेनैवसिद्धेस्थानिवत्सूत्रंव्यर्थमित्याशंक्याह॥यत्रेति॥यथाराममित्यादौमकारस्यानेनसुप्त्वाभावात्सुपिचेतिदीर्घोन॥वि
कृतेत्ति॰यथापंचवःनइत्यादौसुबंतत्वेनपदत्वम्॥त्वंतिष्ठेत्यादौतिङ्ङतिङः—— इतिनिघातः॥अयुरित्यादौसिजभ्यस्तेतिजुसभा
वश्चसिध्यति नन्वेवंमघवतइत्यत्रस्थानिवद्भावेनान्नंतत्वात् श्वयुवेतिसंप्रसारणापत्तिरितिचेन्न॥अनइत्यस्यानुवृत्त्यात्राश्रयणा
णान्नंतेस्वतत्प्रवृत्तेः॥अतएवबहुश्वेत्यत्रनसंप्रसारणं॥नन्वेवंगुडोदकमित्यादौएकदेशविकृतन्यायेनदकशब्देउदकपाद्दत्वं
नस्यात्॥अक्तपरिमाणेएतदप्रवृत्तेः॥किंचप्राग्दीव्यतीत्यत्राप्यक्तपरिमाणत्वेनतदप्रवृत्तौउक्तभाष्यासंगतिः॥किंचकारेत्या
दौअर्धविका  तथाचस्थानिवत्सूत्रेआदेशग्रहणात्॰॥

त्रि० क्वचिदेतदनाश्रयणं इत्येव सारं न त्वक्तपरिमाणइत्यादिभाष्योक्तमिति भावः ॥ भिंधकीति ॥ क्वचित्तु स्तके भिं धीत्यपपाठत्वात्तातङि धि
गा० भावो न स्यात् ॥ इति पाठो दृश्यते स तु न युक्तः ॥ तातङो वैकल्पिकत्वेन तदभावे धिभावप्रसक्तौ क्तरूपसिद्धेः ॥ अत्र वदंति ॥ विकल्प
१३ शास्त्राणामभावपर्यंतमपि तात्पर्यं ॥ तथा च यस्य हलः इत्यत्र भाष्ये संघातग्रहणं चेत्त्वं यस्य विभाषायां दोषो भवति ॥ समिधि ।
ता ॥ समिध्यिता ॥ यदा लोपस्तदा सर्वस्य लोपः ॥ यदा ऽलोपस्तदा सर्वस्यालोपः प्राप्नोतीति ॥ तथा च भिंधीति पाठो ऽपि सुयोजः
॥ शब्देंदुशेखरे विप्रतिषेधसूत्रस्थोप्येवमेव योजनीय इति ॥ अत्रोच्यते ॥ अभावपर्यंततात्पर्येपि धिभावस्याभावेनाविरोधा
त् ॥ विप्रतिषेधासंगतिः किंच प्राप्तविभाषाणामेवाभावपर्यंततात्पर्यं नाप्राप्तविभाषाणां ॥ तथा च स्वरतीति सूत्रे भाष्यम् ॥ यदि
स्वरतिरुदात्तः पठिष्यति विप्रतिषेधः स्वरतेर्वैक्लृत्वादत्तस्येति विप्रतिषेधेनेति तन्नोपपद्यते । किं कारणम् । स विधिरयं प्रति
षेधः विप्रतिषेधयोश्चायुक्तो विप्रतिषेधः यदा तु स्वरतिरनुदात्तः तदा विध्योर्विप्रतिषेधोपपत्तिरिति ॥ कथस्य विभाषेत्यस्या
पि प्राप्तविभाषात्वात् । तत्पर्यंततात्पर्यं । अत एव मुमुक्षुत्वं वत्स इत्यत्र नाभ्यासलोपः । अन्यथा मुचोऽकर्मकस्येत्यनेनाभावस्यापि विधा
नात् ॥ तस्य चात्र लोप इत्यत्रात्रग्रहणे तदापत्तिः ॥ मम तु हलंताच्चेति कित्त्वेनाप्राप्तगुणविधानेन प्राप्तविभाषात्वाभावात् ॥ नाभावप ए०
र्यंततात्पर्यमिति न दोषः ॥ एवं च प्रकृते तातङो प्राप्तविभाषात्वेन नाभावपर्यंततात्पर्यमिति नन्वेवं प्राप्तविभाषाया भावतात्पर्यकत्वे १३
उभयथर्क्षु इत्यस्यापि तथात्वापत्त्या रुत्वाभावे प्यत्रानुनासिके त्वनुनासिकापत्तिः ॥ किंच द्वितीयतृतीयेत्यस्यापि तथात्वेनैतत् बो
धितसमासाभावेनापवादेन बाधितस्य षष्ठीसमासस्य पक्षे नापत्तिरिति चेन्न ॥ अत्रानुनासिक इत्यत्र पूर्वं त्वस्य सावधिकत्वेनैत ।

त्प्रकरणविहितकार्यापेक्षस्यैव तस्य संनिधानात् प्रहेणावध्यवधिमतोः साजात्यनियमेनाभावस्य तदवधित्वासंभवादेकरुत्वा
प्रवृत्तेः समो वेति विहितलोपस्य तु वैजात्येप्यत्र प्रकरणे विधानसामर्थ्यादवधित्वं षष्ठीसमासस्त्वन्यतरस्यां ग्रहणसामर्थ्यात्पक्षे सु
लभः ॥ यद्वा द्वितीयादीनि प्रथमां तेन निर्दिश्यके नापि समासो विहित इत्यप्राप्तविभाषैषा ॥ किंच भिंधीति पाठे तातङा बाधितस्य धेः
पुनःप्रसंगविज्ञाने भिंतादित्यस्य दत्ततिलांजलिताभावांशे सकृद्गति न्यायाश्रयणे भावांशे पुनःप्रसंगाश्रयणे चार्धजरतीयतेति दिक्
सकृद्वद्बाधितं तत्सर्वथाबाधितमेवेत्यर्थः ॥ पर्यायेणेति ॥ अत्र दृष्टांत स्तृजादिवदिति ॥ हेतुस्तु बाधकाभावादिति ॥ यथेत्सार ।
भ्य कार्यं करोतीत्यंतो ग्रंथः ॥ दृष्टांत हेतुमतिपादक इति न भ्रमितव्यं ॥ तत्र लक्ष्यानुसारात्क्वचिच्छास्त्रीयदृष्टांताश्रयणं ॥ क्वचिल्लौ
किकदृष्टांताश्रयणमित्युत्तरग्रंथानुरोधात् ॥ किंतु यथेत्यारभ्य तस्येत्यंत एको दृष्टांतः ॥ उत्तरत्र द्विर्यथा तथयोरभावात् ॥ एवमे
व भाष्य स्वरसाच्च सततयोः पर्यायेणेत्यंतोक्तिस्तु उत्तरत्र युगपदित्यस्य नादिक्षु चेत्यस्य व्यावर्त्यप्रदर्शनाय ॥ अत्र च मेष्यस्थानी ।
यता संस्कार्यस्य लक्ष्यस्य तुल्यबलपुरुषद्वयस्थानीयता तुल्यबलयोर्लक्षणयोरिति बोध्यं युगपदुभयोरसंभवांशे चायं दृष्टांतः
॥ नानादिक्षु चेत्येतत्तु युगपदुभयासंभवे हेतुः कथनाय ॥ न तु दार्ष्टांतिकानुगमाय अनवयवेनेत्यस्य विवरणं साकल्येने ।
ति ॥ अनुबंध्य इति ॥ सानुस्वारः पाठः ॥ अन्यथा दृध्यापत्तेः ॥ प्रतिबध्येति नैयायिकानां पाठः प्रामादिक एव ॥ भाष्यसंमत
मार्ग एवेति ॥ परे तु दृष्टांतस्य संभावकत्वेपि नार्थनिश्चायकत्वं ॥ अर्थनिश्चयस्तु हेतुत एव ॥ तथा च विप्रतिषेधसूत्रस्य भाष्य
स्य हेतुविशेषं पुरस्कृत्य न दृष्टांतमात्रेणोक्तन्यायद्वयसाधनाय प्रवृत्तिः ॥ किंतु तत्पुरस्कारेणैव तत्रायतिपत्तौ हेतुस्तुल्यबलत्वा ।

यदात सुभा विति लौकिक एव दृष्टांतो भगवता भाष्यकृता उपन्यस्तः पर्यायेण प्राप्तौ हेतुस्तु अनव
त्रि० द्विति॥ अत्र शास्त्रीय दृष्टांताभावात्॥ यदात सुभा विति लौकिक एव दृष्टांतो भगवता भाष्यकृता उपन्यस्तः पर्यायेण प्राप्तौ हेतुस्तु अनव
वा० यव प्रसंगात् प्रतिपदविधेश्चेति॥ दृष्टांते हेतूपपादनमुखेन दार्ष्टांतिके तत्संगमन एव तात्पर्यात्॥ अत्र च दृष्टांत स्तृजादिः तत्र च प्रति
१४ पदविधिरूपो हेतुर्व्यक्ति पदार्थपक्ष एवोपपद्यते॥ तथा हि व्यक्ति पक्षे पाणिनि पठितं शास्त्रं न साक्षाल्लक्ष्यस्य संस्कारकं॥ अनेक विषय
कत्वानापत्तेः किंतु यणो मय इति वह्निनिगमनाविरहात्॥ तत्तल्लक्ष्यविषयकानेकवाक्यकल्पकं॥ कल्पितैश्च तैर्लक्ष्य संस्कार इति
क्रमः॥ एवं चात्र शास्त्राणां अनवकाशत्वलक्षणप्रतिपदविधित्वं स्पष्टमेव॥ अत एव विप्रतिषेधसूत्रे भाष्ये ऽप्रतिपत्तिर्वोभयो
स्तुल्यबलत्वात्॥ तत्र प्रतिपत्त्यर्थवचनमित्युक्त्वा तव्यदादीनां त्वप्रसिद्धिर्न हि किंचित्तव्यदादिषु नियमकारि शास्त्रमारभ्यते॥
येन तव्यदादयः स्युः॥ यश्च भवता हेतुर्व्यपदिष्टः॥ अप्रतिपत्तिर्वोभयोः तुल्यबलत्वादिति॥ स तुल्य स्तव्यदादिषु नैष दोषः॥ अ
नवकाशास्तव्यदादयः॥ उच्यंते च तव्यदादयः॥ उच्यंते च ते वचनाद्भविष्यंति यश्च भवता हेतुर्व्यपदिष्टस्तृजादिभिस्तुल्यं पर्याय
प्राप्नोतीति स तुल्यस्तव्यदादिष्वित्युक्तं तत्र तृजादिभिरिति प्रतीकमुपादाय कैयटे नोक्तं आदिशब्दस्य प्रकारार्थत्वात् तृजादिभि ए०
स्तव्यदादयो न भिन्ना इत्यर्थ इति जातिपक्षे च शास्त्रस्य सर्वविषयकत्वात् तेनैव लक्ष्यसंस्कारात्तस्य चान्यत्र चारितार्थ्यान्न प्रतिप १४
दविधित्वमित्याहुः॥ असंभव एवेति॥ नत्वेककार्यित्वमित्यर्थः॥ तत्फलमाह यथेति॰ शाभावो नांशिपि चरितार्थः संज्ञानां त्वे
कविषयाणामेव बाध्यबाधकभावः॥ आकडारादित्यनेन तादृशीनामेव परस्परमसमावेशबोधनात्॥ ह्रस्वांतांगेति॥ यद्यागम
न्यायस्य नुम् प्रवृत्युत्तरं प्रवृत्तावपि अंगसंज्ञाविधौ तदादिग्रहणान्नांतस्यैवांगत्वमिति भावः परत्वादिति॰ ननु सार्वधातुके श प्र

विधानात् कृत एव नियमे विकरण इति तयोर्विप्रतिषेधानुपपत्तिरिति चेन्न॥ अविशेषात्सामान्यशास्त्रेण लस्याद्यद् शसुति वा॥
दिषु कृतेषु पश्चात् नियमेन लुगादिनेव जातनिवृत्तिरित्याशयात्॥ तिङ्‌विधानमिति॥ तिङ्‌विधानमित्यपपाठः परस्मैपदवि
धानात्॥ स्येपीति॥ परत्वादिति भावः॥ शबादिभ्यस्त्विति॥ शबादीनां सार्वधातुकनिमित्तत्वादिति भावः॥ यद्वेति द्वंद्वे चिंत्यम्॥
एकवाक्यतया विधिरिति पक्षे ल्लादेशानामपि प्रकृतिविशेषापेक्षत्वेन स्यास्यात्॥ अत्र पक्ष इति॥ दिग्योगलक्षणपंचम्याभि
त्यर्थः॥ भाविसंज्ञेति॥ तडानाविस्यत्र चानशादिव्यावृत्तये ल इत्यस्यानुवृत्त्या एकवाक्यतया विधिरिति पक्षे लस्यानेघाद्यनिवृत्ते
रिति भावः॥ एकवाक्यतया विधिरिति सिद्धांतपक्षं परिष्कृत्य विकरणेभ्य इति॥ प्रकृत परिभाषाश्रयणपक्षं गौरवेण निराकरोति
॥ भिन्नेति॥ वैयर्थ्यापादनेन इष्टापत्तिं परिहरति॥ शास्त्रानर्थक्यमिति॥ इति गौरवमिति॥ एतस्य विहितानां नियम इत्य नेना
न्वयः॥ यद्यपि पूर्वस्मात्परं बलवदित्युत्तरपरान्नित्यं बलवदित्येवं पठितुमुक्तं॥ तथापि परं बलवदित्येतदपवादत्वादेतन्म
ध्ये पठितं॰ वीजमिति॰ ननु न्यायादपि प्रसक्तस्य शास्त्रस्य बलवत्त्वेन कथं परान्नित्यादेर्बलवत्त्वमिति चेन्न॥ तुल्यबलयोर्विरोध
स्यैव प्रतिषेधशब्दार्थत्वात्॥ नित्यानित्ययोरतुल्यबलत्वात्॥ यत्तु तत्र नित्यस्यावश्यकतयांतरंगस्य ज्ञापनादिनापवादस्य
वचनसामर्थ्यात् बाधकत्वे स्थिते तद्भिन्नोस्य विषय इत्याह॥ तुल्यबलेतीति शब्देंदुशेखरे उक्तं॥ तत्त्वयुक्तमेव॥ शब्दांतरा
दित्यादीनां फलानि मृग्याणि॥ एतन्मूलकमिति॥ कृताकृतप्रसंगीत्यत्र विशेषनिवेशमूलकमित्यर्थः॥ निमित्तमिति॥ प्रसं
ग इत्यर्थः॥ णौचङीति॥ अत एवेति शेषः॥ तस्य चेच्छयान्यतरस्योभयस्य वा नियामकत्वे नोल्लेख्यत्वादेवेत्यर्थः॥ तदसंगति

रिति॥नन्वंतरंगत्वात्त्रयादेशेपिपुनस्तिस्रादेशेनतत्संगतिरितिचेन्न।त्रयादेशवदंतरंगत्वान्नामीतिदीर्घेपश्चात्तिस्रादेशेतस्यासिद्ध-
त्वान्नदीर्घःस्यानिवृध्यातुनभवति॥लक्ष्येलक्षणस्येतिन्यायेनपुनर्दीर्घाप्रवृत्तेः॥एतेनेति॥अंगशब्देनशब्दरूपनिमित्तस्यैवग्रह-
णेनेत्यर्थः॥अपरनिमित्तकत्वेनेति॥इदंपरनिमित्तत्वेनस्यादीनांबहिरंगत्वमितिवक्ष्यमाणंचाप्युक्तं॰प्रमाणाभावात्॰भाष्यविरो-
धाच्च॰तथाहि॰नामीति सूत्रेआमीतिन्यासेनित्यत्वाद्दीर्घत्वमापादितं॥तद्रीत्याबहिरंगत्वात्तदसंगतिः॥तथाकृतोभारद्वाज-
स्येतिसूत्रेऽचइत्सत्रोपदेशग्रहणानप—कर्षेजहर्थेत्यत्रपरत्वाद्गुणेऽनजंतत्वात्प्रतिषेधोनप्राप्नोतीत्युक्तं॥तद्रीत्यागुणस्यब-
हिरंगत्वात्तदसंगतिरितिदिक्॥पचेदितिपाठः॥पचेरन्नितिपाठेतुअंगस्यसंज्ञे तिषष्ठीतत्पुरुषेणधातुसंज्ञाग्राह्या॥यणाबा-
धित्वादिति॥ननुतदंतविधिपक्षेयणोबहिरंगस्यगुणेनैवबाधनात्कथमेतदितिचेन्न॥तदंतविध्यभावपक्षएवैतस्यप्रवृत्तेः॥४
तदुक्तं॥सिद्धांतेति॥सप्तम्याद्यंततयेति॥नन्विदंकथंप्रकृतभाष्याल्लब्धमितिचेन्न॥यणोनिमित्तांशेअधिकप्रवेशेगुणस्या-
प्युद्देश्यांशेअधिकप्रवेशेनसाम्यापत्त्यांतरंगत्वोपपादनासंभवात्॥इतिसूक्तमिति॥वस्तुतइदमेवयुक्तं॥ज्ञापकंचात्रस्वरदीर्घ-
यलोपेषुसंप्रसारणयलोपग्रहणम्॥तद्धिवाय्वोरित्यत्रवलिलोपेस्यानिवत्त्वाय॥वलिलोपेतत्प्रवृत्तौतुतथैवसिद्धेतद्वैयर्थ्यं॥फलंपचे-
दित्यत्रतत्प्रवृत्तेः॥अन्यथाइयादेशस्यप्रकृतिप्रत्ययापेक्षत्वेनबहिरंगत्वाल्लोपानापत्तिः॥एवमक्षद्यूरित्यत्रऊठोऽसिद्धत्वाद्यलो-
पोन॥नाजानंतर्यइत्यस्यांतरंगेकर्तव्येइत्यर्थेमानाभावोगौरवंच॥वलिलोपेजातबहिरंगसिद्धत्वाभावस्यैवकल्पनान्नतत्सूत्र-
स्यैतद्भाष्यविरोधः॥किंचात्रसंप्रसारणस्यवलोपापवादकत्वेनतक्रन्यायेनपुनर्वलोपाप्रवृत्तौतत्रवकारोच्चारणस्यचारितार्थ्यात्



वप्रेत्यादौलोपोदुर्वारः॥भाष्यमपित्व—न्मतेअसंगतं॥ननुपंचेत्यत्रषट्संज्ञायांनलोपासिद्धत्वस्यनफलमितिनलोपः॥सुवि-
तिसूत्रस्थभाष्यासंगतिः॥बहिरंगासिद्धत्वाभावेनपंचेत्यत्रटाप्वारणायतदावश्यकत्वात्इत्यतआह॥पंचेत्यत्रेति॥सामर्थ्ये-
नेति॥इदंचिंत्यं॥प्रियपंचाद्रौपदीत्यत्रडाप्ङीपोर्निषेधायोक्तव्याख्यानस्यावश्यकत्वात्॥व्याख्यानसामर्थ्येनार्थविशेषक-
ल्पनस्यकुत्राप्यदृष्टत्वाच्च॥वृत्रहभ्यामिति॥ननुत्रिपाद्यांबहिरंगपरिभाषायाःअप्रवृत्त्याकथमेतदितिचेन्न॥नलोपःसुवि-
तिसूत्रेकृतितुक्ग्रहणाभावेनलोपस्यतुक्यसिद्धत्वाभावेत्रिपाद्यामप्रवृत्तिबीजस्यासिद्धत्वस्याभावात्॥ननुतत्कालप्राप्ति-
कमितिवत्प्राप्स्यमानमित्यपिनिवेशनीयंवलिलोपसूत्रेभाष्येऽनयापरिभाषयावलिलोपेप्राप्स्यमानसंप्रसारणासिद्धत्वोक्तेरि-
त्यतआह॥त्रस्याद्दिष्विति॥तद्वैयर्थ्यमिति॥ननुपरंपरयाबहिरंगत्वानाश्रयणात्ज्ञापितेपिनचारितार्थ्यंसंप्रसारणस्यभसंज्ञा-
द्वारैवबहिरंगत्वात्इतिचेन्न॥वहेर्णिजंताद्धिचिऊठभावायांगसंज्ञास्तित्वप्रत्ययेनवाहोविशेषणेनसाक्षादेवबहिरंगत्वात्॥
ननुज्ञापितेपिपुनर्व्यर्थंबहिरंगासिद्धत्वेपिअंतरंगस्यपूर्वरूपस्यसिद्धत्वेनत स्यगुणेरूपसिद्धेः॥नचसंप्रसारणाच्चेत्यस्यपू-
र्वपरयोःपूर्वःशिष्यते इत्यर्थान्निर्दोषइतिवाच्यं॥अमिपूर्वइत्यत्रापितथापत्तौरामिमित्यादौसुपिचेतिदीर्घापत्तेरितिचेन्न॥ऊठ्-
ग्रहणेनैवकादेशस्यस्थानिसमाननिमित्तकत्वस्यापिकल्पनात्॥अतएवक्ङितिचेतिसूत्रेभाष्येऔयतइत्यत्रवृद्धेर्बहिरंगत्वमु-
क्तं॥असिद्धवत्सूत्रेभाष्येपपुषइत्यादौसंप्रसारणशब्देनपूर्वरूपमुपादायतस्यबहिरंगासिद्धत्वमापादितं॥कृन्मेजंतइतिसूत्रेभा-
ष्येयदाद्यकारपदेनपररूपमादायसन्निपातपरिभाषयातस्यटाप् निमित्तत्वमापादितं॥ननुकथमूठ्ग्रहणंज्ञापकंप्रष्ठौ-

त्रि० हदृत्यादौ उडिद्भितिस्वरार्थं तस्या वश्यकत्वात् इतिचेन्न॥ स्वरविधायकेउहेरपिपाठ्यत्वात्॥ ह्रस्वपाठे नैकमात्रालाघवात्॥ वहेः
गा० क्विपोऽनभिधानमेतद्भाष्यप्रामाण्यात्॥ यद्वा ह्रस्वउठ् विधेयः॥ स्वरविधायकेचठिदिति पाठ्यं तस्मादूठ् विधानं अनन्यार्थमितिभा
१६ ष्योक्तं ज्ञापकं सम्यगेवेतिस्थितं॥ वाहेर्वेति॥ अत्रमानंचिंत्यं॥ णिलोपस्यस्थानिवत्त्वेनउठोऽत्राप्रवृत्तेः॥ विसर्जनीयसूत्रस्थं कैयट
मनुवदति॥ येपीति॥ नादरणीयाइति॥ परेतुकार्यकालपक्षेपि त्रिपाद्यामप्रवृत्तौ मानाभावः॥ नच पूर्वत्रमिति परस्यासिद्धत्वादि
त्युक्तयुक्तिर्मूलं॥ पूर्वत्रकर्तव्ये परस्यासिद्धत्वेपि तत्रकृते परस्यासिद्धत्वे मानाभावात्॥ त्वयाप्येवमेव शब्दरत्नेउपपादितत्वाच्च॥
कर्तेरिचर्षिदेवतयोरित्यादिनिर्देशाच्च कार्यकालपक्षेस्यास्त्रिपाद्यां प्रवृत्तौ गमकाः॥ अन्यथाविसर्गे तदसंगतिः॥ नचात्रगुण
विसर्गयोस्तुल्यनिमित्तत्वेनांतरंगवहिरंगभावः॥ विसर्गविधौ रेफस्यस्थानितयोपादानेनोत्तरपदसंबंध्येकवर्णनिमित्तक
त्वं॥ गुणस्यतु पदद्वयसंबंधिवर्णद्वयनिमित्तकत्वमितितत्संभवात्॥ किंचसर्वथास्यास्त्रिपाद्यामप्रवृत्तौ दध्यत्रेत्यत्रसंयोगांतलो
पाप्रवृत्तयेकार्तिरित्यत्र निष्ठानत्वाप्रवृत्तये नार्कुट्वुसत्र विसर्जनीयप्रवृत्तयेचानेकवचनारंभे गौरवं॥ एते पूक्तकार्याप्रवृत्त
येभाष्यवार्तिककाराभ्यां वहिरंगपरिभाषयैवोक्तत्वेन तदसंगतिश्च॥ विसर्जनीयसूत्रस्थमतोऽयुक्तः परिहारो नवा वहिरंगलक्ष ए०
णत्वात् इतिभाष्यंतु तस्य दोषइत्यत्रल — त्वग्रहणं कुर्वता वार्तिककृता पूर्वत्रकृतेपि परस्यासिद्धत्वांगीकारात् तद्रीत्यातंप्रति १६
तत्परिहारस्यायुक्तत्वाभिप्रायकमितिनतद्विरोधः॥ अतएव प्रत्याहाराह्निकेनार्नमनिरित्यत्रणत्वंप्रतिहद्विरसिद्धेत्युक्तं भाष्ये॥ किं
चवार्तिकेल त्वग्रहणंज्ञापयतेइत्यत्रल त्वेस्यानिवद्भावार्थं॥ अत्रैकादेशापेक्षयाविशिष्टसमुदायनिमित्तकं लत्वमेववहिरंग

मितिनवहिरंगपरिभाषयासिद्धिः॥ विसर्जनीयसूत्रस्थंतु एवमेषापरिभाषासिद्धाभवतीत्यंतमेव भाष्यं सिद्धांतयुक्तिः॥ कुतोनुखल्
त्विस्यादित्वेकदेशिनः॥ पूर्वत्रकृते परस्यासिद्धत्वे मानाभावात्॥ फलाभावात्पूर्वोक्तानेकभाष्यविरोधाच्चेति प्राहुः॥ अंतरंगेकर्तव्ये
जातवहिरंगमसिद्धं इत्यंशेज्ञापकमुक्त्वात त्कालमाप्तिकमसिद्धमित्यंशे ज्ञापकमाह॥ अतएवेति॰ परमपीति॥ अपवादोयद्य
न्यत्रचरितार्थइतिन्यायादितिभावः॥ संबंधोतरमेवेति॥ ननुसाधनसंभवात्पूर्वं क्रियावोधकत्वाभावे कथं धातुत्वमितिचेन्न
॥ धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा॥ धातुत्वंकर्मभावश्च तथान्यदपि दृश्यतां इतिहरिणैव समाना[illegible]त्॥ अ
स्यार्थः॥ यथाभाविसाधनसंबंधाश्रयेण क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते॥ तथाचभावीषिकर्मत्वमाश्रित्ये विकर्मत्वमु
क्तं॥ तथाभाव्युपसर्गसंबंधादुपक्रमएव विशिष्टक्रियावचनत्वंदृश्यतामिति॥ कर्मणिलकारसिद्धिं परिहरति॥ उपसर्गद्यो
त्येति॥ पूर्वंधातुरुपसर्गेणयुज्यते इत्यस्यतदर्थेनयुज्यतइत्यर्थकल्पनमतिषेधइतिभावः॥ एवंचेति॥ साधनसंबंधात्पूर्व
मुपसर्गद्योत्यार्थांतर्भावेण धातुनैवार्थाभिधानेउपसर्गार्थस्यपूर्वमुपस्थित्यापूर्वोपस्थितार्थनिमित्तकत्वरूपमंतरंगत्वंसुटइति
भावः॥ णत्वमिति॥ इदंचिंत्यं॥ त्रिपाद्यामंतरंगपरिभाषाया अप्रवृत्तेः॥ अंतरंगत्वात्सवर्णदीर्घइति॥ वाणोदागमितितुसमका
लप्राप्तिकएवेतिभावः॥ किंचेति॥ पूर्वंतिङि तुविशिष्टेनैवसामर्थ्यंस्यात्॥ विभक्तिसमवधानेतदंतरेणैकार्थीभावस्यकल्पना
त्॥ तत्रातिङ्ग्यपिसाधनसंबंधोजातएवेति तदासमासोदुर्वारः॥ तिङ्पदेनतिङ्भाविनोपिग्रहणात्॥ प्रपिपठिषतीत्यादौ
समानकर्तृकादित्युक्तेः॥ सनर्थसाधनेनैवमकृतेरपितदाकांक्षाशांतेः सनेकार्थीभावात्तद्विशेषणत्वाच्च प्रकृत्यर्थस्यतदु

त्रि० तरंप्राद्वियोगइतिनसमासः॥ नेर्विंशइत्यादेस्तत्परत्वयोग्यादित्यर्थः॥ अलंबहुनेति॥ परेतुसंवं धातूर्वंउपसर्गद्योत्यार्थांतर्भावेण धातोर्ह
गा० तौउपसर्गप्रयोगेहेत्वभावात्॥ तदर्थेद्दतिमतःप्रयोगेएवतदर्थप्रतीतिनियमात्॥ अन्यथाटावाद्यभावेपिस्वरूचांदितः॥ स्त्रीत्वादिप्रत्ययप्र
१७ संगात्॥ किंचैवंसतिसंचस्कारेत्यादौद्वित्वादितःपूर्वंसुडनापत्तिः॥ एवंचपूर्वंउपसर्गेणयोगोनामतदर्थसंबंधः॥ ततउपसर्गयोगात्पूर्वंसा
धनकार्ययोगः॥ ततउपसर्गयोगइतिमंजूषायांत्वयोगत्वेनउपसर्गार्थस्यकृज्ञादितएवप्रतीतावपिसाधनकार्यद्वित्वादितः पूर्वमुपस
र्गयोगाभावेनसंपरिष्वांकृजःपरत्वाभावात्॥ तत्परत्वयोग्यस्यकृञइत्यर्थत्वेतुयदुपसर्गनिमित्तकंकार्यंद्वित्वादित्वदीयप्रयासवैयर्थ्य
संपरिष्पामपरस्यापिकृञः तद्योग्यत्वेनतस्यसुडापत्तिश्च।यदिसंपरिष्पामितित्वत्तीयातदाव्यवहितस्यापिसुट्प्रसंगः॥ एतेननेःसंप
चेत्यादौनव्योकोपपत्तिःपरस्ता॥ अतएवगोसंदायइतिआदिसिद्धिः॥ अतएवचातोनुपसर्गेकइत्यत्रानुपसर्गइतिचरितार्थं॥ तदेतद
भिप्रेत्यसुट्कात्पूर्वःगतिर्गतावितिसूत्रयोःभाष्यकैयटयोःपूर्वंधातुःसाधनेनयुज्यते इत्युपमन्यपूर्वंधातुरुपसर्गेणयुज्यतेइतिसिद्धां
तितं॥ हरिणाप्युक्तं॥ क्रियाविशेषाःसंघातैःक्रम्यंतेतथाविधाः॥ कार्याणामंतरंगत्वमेवंधातूपसर्गयोःसाधनैर्यातिसंबंधंतथाभूतै
वसाक्रियेति॥ कथंतर्हिप्रत्ययःअध्येतेत्यादिसिद्धिरितिचेत्॥ पूर्वंधातुःसाधनेनयुज्यतइतिसिद्धांतादरेणेत्यवेहि॥ अपंचसिद्धांतेन ए०
धातुलोपसूत्रेउपपदमतिङितिसूत्रेचभाष्यकैयटयोःस्पष्टः॥ अत्रप्रत्ययःणेरध्ययनेवृत्तमित्यादिनिर्देशागमकाः॥ अत्रचसा १७
धनपदंधातुप्रकृतिकप्रत्ययार्थपरंतत्प्रकृतिकप्रत्ययपरंवातेनाभिषावपतीत्यादौण्यंतेनाभेर्धातुनासमासः॥ नाप्युपसर्गस्यभा
वतिङासमासः॥ नन्वेवंनेर्विशइत्यादौपूर्वंधातुरुपसर्गेणेत्यस्यावश्यकतयातत्रोपपदमतिङितिसमासोदुर्वारइतिचेत्तथापिसंच

स्कारेत्यादौसमासोदुर्वारइतितुल्यं॥ यदितुउपसंजनिष्यमाणनिमित्तोप्यपवादइतिन्यायापूर्वंधातुःसाधनेनेतिन्यायाश्रयणमपि
उपसंजनिष्यमाणन्यायानुग्रहायैव॥ नधातुलोपसूत्रेभाष्येमेंइत्यादौपूर्वंधातुःसाधनेनेतिन्यायाश्रयणमपिउक्तन्यायानुग्रहा
यैव॥ पूर्वंधातुरुपसर्गेणेत्यादेरंतरंगत्वाद्गुणेउपसंजनिष्यमाणन्यायाननुग्रहःस्फुटएवेतुच्यतेतर्हिममाप्येतत्तुल्यमेव॥ ननुपरा
वनुपात्ययइत्यादिविषयेपूर्वंधातुरुपसर्गेणेत्यस्यावश्यकतयापूर्वंसवर्णदीर्घेपरायइत्याद्यापत्तिरितिचेन्न॥ विभिन्नकालिकयो
रपिवार्णादांगंबलीयइतिन्यायांगीकारात्॥ पुपयोःशेतेःपर्याये इतिनिर्देशोप्यत्रगमकः॥ अतिप्रसंगस्त्वनिसत्वाद्वारणीयः॥ ननु
प्रत्ययइत्यादिरूपाणामप्येवंसिद्धेःपूर्वंधातुःसाधनेनेतिकिमर्थमितिचेत्॥ अध्यगीष्टेत्यादौअडागमस्यगाङादेर्दीर्घादितःपूर्वं
प्रवृत्त्यर्थमित्यवेहीत्याहुः॥ यासुडंतरंगइति॥ अत्रपाठद्वयं॥ यासुडंतरंगइत्युत्तरं॥ एतेनेत्यारभ्यस्यादीनांबहिरंगत्वाच्चेत्येकः॥ का
प्यनुक्तेस्वाच्चेत्युत्तरमतेनेत्यादिरित्यपरः तत्रद्वितीयःसुगमः॥ आद्येएतेनेत्यस्यविशेषापेक्षस्ययत्रसामान्यधर्मनिमित्तकत्वमपि
तत्रैवतस्यबहिरंगत्वांगीकारेणेत्यर्थः॥ सिद्धांतिनेति॥ अंतरंगत्वातबहुव्रीहिरितिवदंतमपेक्ष्यैषसिद्धांती॥ परमसिद्धांतीतुनैषद्वि
गुःकस्तर्हिबहुव्रीहिरितिवदन्नेवेतिवोध्यम्॥ अन्यथेति॥ सामान्यापेक्षांतरंगोत्सर्गेणविशेषापेक्षबहिरंगापवादवाधइत्यर्थः
॥ सूचितइति॥ तत्रहि॥ अरुदितंअरुदितेत्यत्रेडपेक्षायांतरंगास्तांतंतामइत्युक्तं॥ परेतुविशेषापेक्षस्यबहिरंगत्वंपुंयोगादितिसूत्र
स्थभाष्यप्रामाण्यात् तत्रहिसांकूटिनमित्यत्रविशेषापेक्षत्वेनबहिरंगमणिनुणइत्यणंवाधित्वांतरंगत्वाद्वृत्तीतिसमासइत्युक्तं ता
मादीनांप्रत्ययविशेषापेक्षत्वेपिड्वःप्रकृतिविशेषापेक्षत्वेनतौल्यान्नपादःपदितिसूत्रस्थभाष्यविरोधः॥ यत्रतुविशेषापेक्षोपवा

त्रि० दस्तत्रतेनैव सामान्यापेक्ष्यस्य बाधइत्याहुः॥ पूर्वोपस्थितेति॥ पूर्वोपात्तेत्यर्थः॥ तेन चङ्निमित्तत्वात्तिप एव पूर्वमुपस्थितिरिति निरस्तम्
गा० वाच्योरित्यादावपीति॥ वस्तुतस्तु वलिलोपेंऽतरंगपरिभाषाया अप्रवृत्त्या स्थानिवत्त्वेनात्र लोपनिवारणं भाष्यकृतां॥ न तु जातस्य बहिरंग
१८ स्य भाष्यासंगतेश्च॥ पपुषइत्यादौ बहिरंगभाषया संप्रसारणस्यासिद्धत्वेनातोलोपानापत्तिप्रतिपादकासिद्धवत्सूत्रस्थभाष्यासंगतेश्च
॥ लोकन्यायसिद्धमंतरंगत्व मादाय ज्ञापकसिद्धपरिभाषया तदाश्रये जातबहिरंगासिद्धत्वबोधने बाधकाभावाच्च॥ नव्यमतेपि०
दीक्षितमतेपि॥ एकादेशेति॥ अंतरंगानपि विधीन् बहिरंगोल्पुग्बाधत इति तु अंतरंगनिमित्तविनाशकल्पनाय एव प्राबल्यबोध
कमिति भावः॥ नन्विणः पूर्वपदसंबंधित्वे असिचदित्यस्य उत्तरपदत्वेन सात्पदाद्योरिति अनेनैव षत्वाभावे सिद्धे षत्वग्रहणवैय
र्थ्यमत आह॥ एकादेशस्येति॥ तेन इति॥ अंतरंगइत्यस्य अनुवर्तनेनेत्यर्थः॥ अत एवेति॥ जातस्येति निवेशादेवेत्यर्थः॥ अत एवे
ति॥ अज्निरूपितमानंतर्यमनिवेश्याज्निष्ठानंतर्यस्य निवेशादेवेत्यर्थः॥ अत एव अचः परस्मिन्निति सूत्रे इति॥ नाजानंत
र्यइतिपरिभाषामा[illegible]यत्व जातस्येति नि[illegible]शापेक्ष्यैतत्॥ भाष्येणैतदभावकल्पनमेव लघ्विति भावः॥ इत्यलमिति॥ परे तु नता ए०
वतुग्ग्रहणमस्यां लिंगं॥ त्वद्रीत्यैकादेशस्य पूर्वपदसंबंधित्वेन तु कोपि पदद्वयसंबंधिवर्णद्वयनिमित्तकत्वात्॥ षत्ववत्तस्य किंच १८
धातूपसर्गयोः कार्यस्य साधनयोगनिमित्तकार्यातिरिक्तकार्यापेक्षयांतरंगत्वस्य त्वया पूर्वमुपपादितत्वेन त्वत्प्रत्ययस्य चासा
धनबोधकत्वेन तुगपेक्षयैकादेशस्यैवांतरंगत्वं किंच साधनकार्यस्यांतरंगत्वे उपसर्गयोगात्पूर्वं साधनयोगेन पूर्वोपस्थितनि
मित्तकत्वं बीजं॥ प्रकृते च तुकः उपसर्गयोगोत्तरमेत्यतिकल्पनिमित्तकत्वेन तद्बीजाभावेन बहिरंगतया ततोप्येकादेशस्यैवांत

रंगत्वं संचस्कारेत्यादौ द्वित्वादितः सुट् इव अन्यथा तत्रापि द्वित्वादितः सुटो बहिरंगत्वापत्तिः॥ प्रेद्ध इत्यादौ तु पूर्वोपस्थितनिमित्तत्वे
न निषेधस्यांतरंगत्वं॥ गुणस्यानंतरोपस्थितिनिमित्तकत्वेन बहिरंगत्वं॥ न तु पदद्वयसंबंधिवर्णद्वयनिमित्तत्वात्॥ पदद्वयसंबं
धिवर्णद्वयनिमित्तकत्वेन बहिरंगत्वं तु धातूपसर्गकार्यभिन्न एव॥ यत्र तु धातूपसर्गान्यतरमात्रनिमित्तकमुभयनिमित्तकं च
तत्राद्यमेवांतरंगं यथा प्रत्यगित्यादौ संयोगांतलोपः॥ प्रकृते तु न तथा तुकोल्पपूर्निमित्तकस्यापि सत्त्वात्॥ किंच षत्वतुकोरित्यत्र
तुग्ग्रहणस्य फलं[illegible] स्यङः ह्रस्वस्तस्य [illegible] त्रं ह्रस्वे छत्रमित्यादौ दीर्घात्पदांताद्वेति तुगभावः॥ न हि तत्रांतरंगत्वं तुकः॥ किंचा
धीत्येत्यादावप्यंतरंगनिमित्तविनाशकेति निवेशे मानाभावेनांतरंगानपि विधीन् बहिरंगोल्पुग्बाधत इति परिभाषयैकादेशं
बाधित्वाल्यपि दीर्घे तुकोः प्राप्त्योर्नित्यत्वात्परत्वादंतरंगत्वाच्च तुकः पूर्वं दीर्घे तुगप्राप्तेस्तदर्थं षत्वतुकोरित्यत्र तुग्ग्रहणम्॥ अ
त एव पराजग्ध्येति सिद्धं॥ अन्यथा त्राप्येकादेशे जग्धिं बाधित्वाल्यपि पश्चाज्जग्ध्यादेशे एकादेशस्यापि तेनापहाराऽपत्तिः मम
त्वेकादेशात्पूर्वं ल्यपि अंतरंगमप्येकादेशं बाधित्वा प्रतिपदविधित्वेन जग्ध्यादेशे तत्सिद्धिः॥ यत्र जग्ध्यादेशस्य पूर्वोपस्थितिनि
मित्तकत्वेनैकादेशतोऽतरंगत्वं नित्यत्वं चेत्युक्तपरिभाषयाल्यपि एकादेशं बाधित्वा जग्धिसिद्धिः॥ तुकस्तु ल्यबुत्तरमेव प्रवृत्त्या
नंतरोपस्थितनिमित्तकत्वेन बहिरंगत्वात्ततः पूर्वमंतरंगत्वान्नित्यत्वाच्चैकादेशे षत्वतुकोरिति तस्यासिद्धत्वात् तुकः सिद्धिः॥ षत्व
ग्रहणं तु ज्ञापकमत्र नैपादिकेंऽतरंगेप्येतत्प्रवृत्तेरुपपादितत्वात्॥ इणः पूर्वपदसंबंधित्वे नेत्याद्ययुक्तं॥ अंतवद्भावस्य कार्यार्थ
तयांऽतरंगपरिभाषाप्रवृत्तिविघटनात्तदप्रवृत्तेः॥ न चावास्तंभत इत्यत्रावाच्चालंबनाविदूर्ययोरिति षत्वे ऽवाटेरेकादेशस्यासि

त्रि० हुत्वार्थषत्वग्रहणस्यावश्यकतया कथं वैयर्थ्यं एकादेशात्षत्वस्यैवात्र बहिरंगत्वात्॥ किंच परासेध तदुत्यादौ षत्वाभावात्॥ अतो
गा० पसर्गाटोरेकादेशस्यासिद्धत्वेनोपसर्गस्थेणः परत्वाभावात्न षत्वं॥ अतएव सहेः साडः सइति सूत्रे सहिग्रहणस्य सह अडेन सहि
१९ तः साडस्तस्या षत्वं साडिरिति फलमुपन्यस्य षत्वं तु कौरित्यनेन खंडितं भाष्यकृतेति वाच्यं॥ ज्ञापकपरभाष्यप्रामाण्येनैषामनभिधा
नात्॥ सहेः साडः सइति सूत्रस्थं भाष्यं तु पूर्वपक्ष्युक्तित्वान्नार्थसाधकं॥ सहेरिति सूत्रस्थभाष्यानुरोधेन विप्रतिषेधसूत्रस्थं
ज्ञापनवर्णनेनैवैकदेश्युक्तिः॥ किंतु वाचनिक्येषेति वा कल्पनीयं॥ अतएवांतरंगइत्यस्यात्रानुवृत्तिः॥ अन्यथास्याः षत्वतु
कोरसिद्ध इति सूत्रस्य यातदसंभवः॥ अजानंतर्यपदेन चाज्निरूपितमेवानंतर्यं न त्वजानिष्टमन्यनिरूपितं ह्रस्वस्यपिति
इति सूत्रस्य भाष्यानुरोधात्॥ धर्मिग्राहकमानाच्च॥ नलोपः सुविति सूत्रे कृत्तितुग्ग्रहणं तु परं परयानिमित्तत्वमाश्रित्य बहिरं
गत्वाश्रयणे तु न मानमिति त्वयैव पूर्वमुक्तत्वेन बहिरंगपरिभाषाया अप्राप्त्याऽवश्यकं नलोपः सुविति सूत्रे भाष्यकृता सन्नि
पातपरिभाषया सिद्धिमाश्रित्य ततत्वं न प्रदीपकृतोक्तभाष्यस्य परिहारे पायांतरोपलक्षणतया बहिरंगपरिभाषया
चतस्य खंडितत्वेन ताभ्यां खंडितेन चार्थांतरोत्प्रेक्षायाः कर्तुमनुचितत्वाच्च॥ अक्षद्यूरित्यादावूठोसिद्धत्वाद्धलिलोपापत्तिरि ग०
ति तु वलिलोपेंतरंगपरिभाषायाः प्रवृत्त्यासमाहितं पूर्वत्रेति प्राहुः॥ ५२॥ बहिरंगमिति॥ ननु अंतरंगपरिभाषायां अंगश १९
ब्देन सप्तम्यंतपंचम्यंतान्यपरे पात्तस्यैव येन विधिरिति सूत्रस्य भाष्यप्रामाण्येन ग्रहणात् कथमेतदिति चेत्सत्यं॥ अतएव
प्रागुक्तमयुक्तमित्यवोचाम॥ इकोयणित्यत्र तदंतविधिपक्षे सोन इत्यत्र गुणापादनभाष्यं तु कैय्यटरीत्या परत्वाभिप्रायकं

तत्रोन शब्दमाश्रित्येत्याद्युक्तिस्तु यणउद्देश्यांशे गुणापेक्षया ऽनपेक्षत्वेन प्रतीतांतरंगत्वनिवारणाय गुणस्य यणपेक्षया निमित्तांशे
न्यूनापेक्षत्वेन समीकरणाभिप्रायेति न येन विधिरिति सूत्रस्य भाष्यविरोधः॥ व्यर्थासेति॥ इति पूर्वसिद्धेड्युत्तरं॥ तवममादिबा
धनार्था॥ तत्र चोत्सर्गसमानदेशा इत्येव सिद्धे इति शेषः॥ ननु ज्ञापितेसंपूर्णसूत्रमेव पुनर्व्यर्थं॥ त्वमावित्यत्र विभक्तिपद्यानु
वृत्यातेनैव सिद्धेरिति चेन्न॥ त्वं डित्यः पुत्रो यस्येति विग्रहे युष्मडित्यपुत्र इत्यत्रत्वादेशाभावाय तत्र विभक्तावित्यस्यावश्यकत्वा
त्॥ तदाशमइति॥ मपर्यंतानुवृत्तिर्ज्ञापि तिवदतो भाष्यकृत इत्यर्थः॥ वाचनिक एवेति॥ ननु प्रत्ययोत्तरपदयोरिति सूत्रे उत्तर
पदग्रहणमत्र ज्ञापकमस्त्विति चेन्न॥ आतोलोप इटि चेत्यत्र कैय्यटरीत्यास्वविरुद्धधर्माक्रांतस्यैव समुच्चयांगीकारेण प्रत्ययप
दस्य विभक्तिभिन्नप्रत्ययपरत्वात्॥ परे तु उत्सर्गसमानदेशा अपवादा इति निर्मूलं॥ भाष्ये क्वाप्यनुक्तत्वात्॥ असिद्धवत्सूत्रस्थ
भाष्यं तु तत्रैव कैय्यटेन प्रकारांतरेण योजितमिति न तन्मूलं॥ युष्माकाद्यादेशविधानं तु ज्ञापकं॥ साकच्कैफलभेदात्॥ प्र
त्ययोत्तरपदयोरिति सूत्रस्य भाष्यस्य त्वयंभावः॥ प्रत्ययपदमुक्तरीत्या विभक्तिभिन्नप्रत्ययपरं॥ तत्र च तवाद्यपवादत्वं न त
क्रकौंडिन्यन्यायेन तदुद्देश्यतावच्छेदकस्य तदुद्देश्यतावच्छेदकव्याप्यत्वात्॥ किंतु उत्तरदित्यादाविव सिद्धस्य पुनरनुवाद
सामर्थ्येन बाधमात्रं॥ एवं च लाघवात्त्वमाविति विहितस्यानुवादेन निमित्तमात्रसमर्पकं विधानं तु तेनैव॥ यथावनोरचेत्या
दौ तद्धितेनैव मपर्यंतस्यादेशसिद्धेस्तदनुवृत्तिवैयर्थ्यं॥ न च मपर्यंतानुवृत्तिरनुवादकत्वार्था॥ अन्यथा सर्वादेशार्थतया विधा
यकत्वापत्तिरिति वाच्यं॥ द्विगुरेकवचनमित्यस्यापि तद्धितार्थद्विगोर्विधायकत्वापत्तेः॥ यदि च लाघवात्तत्रतथा॥ प्रकृतेपि त

त्रि० द्धितथाइत्यवे हि॥ यद्दितत्सार्थक्याया पूर्वविधायकत्वं तर्हिनतवादिवाधनार्थत्वं तद्वीजस्यानुवादकत्वस्याभावात्॥ तत्र कौडि
गा० न्यन्यायस्य चोक्तरीत्या प्रवृत्तेः॥ तथा चांतरंगत्वात्तवादयएवानयोर्बाधका इतिमर्थंसद्सांज्ञापकं॥ एवंच सूत्रमेवज्ञापकं
२० नमपर्यंतानुवृत्तिः॥ अतएव भाष्ये यद्यत्रान्ये एकवचनादेशाःस्युः॥ मपर्यंतानुवृत्तिरनर्थिका स्यात् इत्युक्तं॥ एकवचनादेश
त्वनादयो यदि बाध्याःस्युरित्यर्थः॥ एवंच्चमपर्यंतानुवृत्तेस्त्वादिबाधकत्वाभावामात्र प्रयोजकत्वंस्पष्टमेवोक्तं॥ तथा च भा
ष्यरीत्यापिज्ञापकसिद्धएवायमर्थ इत्याहुः॥ शंकापरेति॥ बहुष्वित्यस्य बहुवचनेष्वित्यर्थमाश्रित्येदंप्रवृत्तम्॥ अशक्यत्वादि
ति॥ इदंसमाधानमित्यनेनान्वयि॥ इदंचिंत्यं॥ सामासिकलुकोप्येवंवलवत्वाभावे भाष्यासंगतेः॥ परेतु अंतरंगानपीत्यपि घ
टितःपाठोनकुत्रापि भाष्ये दृश्यते॥ अतएव स्वमोर्नपुंसकादित्यत्रापि घटितः पाठःकेषांचिन्मतेनोपन्यस्तःकैय्यटेन॥ त
थाच वहिरंगलुकएवानेन वलवत्त्वं॥ अतएव तद्राजस्येतिसूत्रस्थं भाष्यं संगच्छते॥ सामासिकलुकोवहिरंगत्वेन तद्राज
लुक्वाधकत्वात्॥ अतएव स्वमोर्नपुंसकादितिसूत्रेत्यदादिभ्यश्चेति भाष्ये पठितं॥ एङ्ह्रस्वादितिसूत्रस्थभाष्यंत्वेकदेशु
क्तिः॥ बहुभाष्यविरोधात्॥ अतएव त्रिचतुरोरितिसूत्रस्थ प्रियतिस्र इतिभाष्यं संगच्छते॥ शब्दांतरादितिन्यायेनलुको। ग्रा०
प्यनित्यतया परत्वात्तिस्रभावप्रवृत्तेः॥ अतएव च भवतादितिसिद्धिः॥ अन्यथाऽनेनन्यायेन हेर्लुकि तदसिद्धिः॥ ममतु २०
शब्दांतरस्येतिन्यायेनलुकोप्यनित्यतया परत्वात्तातङ्सिद्धिः अतएवत्वंब्राह्मणकुलमित्यादौलुकंवाधित्वाम्॥ सनीत्वंस
इत्यादावपिलुक्वहिरंगएवेतिनदोषः॥ सुपथिवनमित्यादौतु कृताकृतप्रसंगित्वमात्रेण नित्यत्वाल्लुकिनात्वादि इतिमाहुः

निमित्तविनाशकेति॥ तत्फलंतु भवकत्तमतिक्रांतो तिभवकान् इतिसिद्धिः॥ अन्यथापूर्वमकचोऽप्रवृत्तौ पश्चादुपसर्जनत्वात्तदनाप
त्तिः॥ एकार्थीभावेनानुपसर्जनत्वनाशेपितस्यलुकूकृतत्वाभावात्॥ पूर्वपदत्वइति॥ सप्तम्यंतपाठः॥ तदाश्रयणे चेत्यपिसप्तम्यं
तं॥ उत्तरपदत्वाश्रयणे इतितदर्थः॥ न्यायेन तदाश्रयणेनिषेधाभावे नेन्द्रशब्दस्योत्तरपदत्वेपीत्यन्वयः॥ ननुउत्तरपदत्वमेवपरा
दिवद्भावेनानेष्यामः॥ ननूत्तरपदाद्युचुत्वं॥ तादृश्यांऽशेऽतिदेशव्यापाराश्रयणेपि अतिदेश्यधर्मनिमित्तकेविधौ तादृश्याऽ
श्रयणमात्रेणनिषेधसर्वासामित्यादौ सुटःभियइत्यादौ इयङः क्षीरपेणेत्यादौ णत्वस्य च अनापत्तिः अत आह॥ तदेकदेशे
ति॥ एकादेशस्योभयस्थानिकत्वेनेंद्रशब्दैकदेशमात्रस्य विकाराभावादित्यर्थः॥ इदमपिचिंत्यं एकदेशविकृतन्यायस्यरा
माविति त्वयैवोदाहरणदानात्॥ अचःपरस्मिन्निति सूत्रे श्रायसावित्यादौभाष्यकृतैतन्न्यायसंचारस्य ध्वनितत्वाच्च॥ गुडोदकमित्या
दौसर्वैरप्येतन्न्यायेन दकशब्दत्वांगीकाराच्च॥ परेतुउभयत आश्रयणेनांतादिवदिति निषेधविषयेनैकदेशविकृतन्यायः॥
अतीपात्परीयादित्यादौ तन्निषेधविषयेपि उक्तन्यायप्रवृत्तौउक्तनिषेधवैयर्थ्यापत्तेः॥ अत्रैवहृस्वापत्तेश्च॥ अतएव मोद्यतेइत्यत्रहृस्वःज्ञाय
तइत्यनलत्वंमाटितेत्यत्रोत्तरपदप्रकृतिस्वरंचभाष्ये शंकित्वोभयत आश्रयणेतिनिषेधेननिराकृतं॥ अत्रैकदेशविकृतमितिन्यायस्य
प्रवृत्तौतदसंगतिःस्पष्टैव॥ एवंसौमेंद्रेनैतन्न्यायप्रवृत्तिरितिभाष्योक्तंज्ञापकंसम्यगेव॥ गुडोदकमित्यादौतुदकशब्दे एकदेशवि
कृतन्यायेनोदकशब्दत्वंनास्त्येव॥ अतएवांतादिवत्सूत्रेभाष्ये अंतवत्वंगुडोदकमितिफलमुपन्यस्यतत:श्राटितेतिचफलमुप।
न्यस्योभयत आश्रयणेतिनिषेधेन निराकृतं॥ तेन गुडोदकमित्य पिनिराकृतमेव॥ नह्यनयोर्मात्रयापि विशेषोस्ति॥ श्रायसावि

नि॰ त्यादौ तु एकदेशविकृतन्यायेनागंत्वादिभवत्येव॥ एकादेशाघटितानां उगिदाद्यंतानां एवनुमादिविधानेन तवत्वस्य नुमादौ वैय्यर्थ्येनाप्र
गा॰ सक्तौ तत्प्रसक्तिमूलोक्तनिषेधस्याप्यदृष्टोक्तनिषेधाविषयत्वात्॥ एवं मातुःकृपेत्यादावप्येकादेशे सकारस्यैव प्रवृत्त्यर्थत्वे एकदेश
२१ विकृतन्यायात्॥ परादित्वं तु न एकादेशमात्रस्य परादित्वबोधने पिरेफविशिष्टे तदभावात्॥ यद्वागमन्यायस्य वर्णग्रहणे प्रवृ
त्त्यभावस्योक्तत्वात्॥ रेफं मुक्त्वा तु नैकदेशमात्रस्य परादित्वबोधनसंभवः॥ परशब्दे नैकादेशप्राक्कालिकसमुदायस्यैव ग्रहणेन रे
फेण व्यवधानात्॥ अत एव इदुदुपधस्येति सूत्रे भाष्येऽनेनैव षत्वमाशंक्य रपरत्वाभावाभिप्रायेण पदादित्वेन प्रत्ययत्वमाश्रि
त्य प्रत्ययविसर्जनीयन्यायमित्युक्त्वा रपरत्वाभिप्रायेण उक्ताभिप्रायकं लुप्यते ऽत्र प्रत्ययविसर्जनीयो रपरत्वस्येत्युक्तं॥ वस्तुतस्तु
नेंद्रस्येति निषेधस्य ज्ञापकत्ववर्णनपरभाष्यप्रामाण्येन पूर्वोत्तरपदैकादेशेनैकदेशविकृतन्यायः॥ तेन गणेशः वनेशः मासेप्रः मा
षेशइत्यादौ इमुडूनलोपरुत्वजश्त्वादी निनेतिप्राहुः॥ मरुदादिभिरिति॥ अजाद्यदंतत्वादिति भावः॥ एवं विष्ण्वादिभिरिंद्रप्राप्तस्य
द्वंद्वे घ्यं तादजाद्यंतमितींद्रस्यैव पूर्वनिपातः॥ सोमस्य त्वभ्यर्हितत्वात्पूर्वनिपातः॥ यद्यपि सोमादिंद्र एव श्रेष्ठः॥ यावदधिकारमि
तिब्रह्मसूत्रव्याख्यावसरे तथैव भाष्यकृद्भिरुक्तत्वात्॥ तथापि चंद्रलोकस्य कर्मिणां परमगत्यवधित्वेन मनसो जातत्वेन च तत्त्वं ग॰
बोध्यं॥ विष्णुर्यद्यपि साक्षात्परं ब्रह्मेति सर्वतोऽप्यर्हितस्तथापि तेयो पेंद्रत्वमित्युक्तं प्राक्॥ तत्थाप्यंगनिमित्तत्वाद्भ्यासांगोभयाश्रि २१
त प्रत्ययनिमित्तत्वाद्वा तत्त्वं बोध्यं॥ वस्तुतस्तु इयर्तिङ्गुत्यादौ श्लुनाप्रत्ययापहारेणाङ्गेपाऽसंभवादियाये त्यादौ उभयोः समत्वात्
त्वादिपङ्वारणायासवर्णग्रहणमावश्यकमिति न तत्ज्ञापकमिति प्राचीनमतमयुक्तमेव॥ सकलस्येति॥ कचिद्बाधकेन वा

धेपि प्राप्तिमात्रमस्त्येवेति भावः॥ ऋधातोरेवेति॥ तेनार्तोऽस्ति कांतैरत्यर्त्तैर्भिर्दधिऋच्छितेवाचरति दधिऋच्छितइति॥ अना आ॥
अभवत् ऐ अभवत् इत्यादौ न॥ एऐः इति॥ न चात्र काम्प्रत्ययादित्ति इजादेरिति वा आमुस्यात्॥ कास्यनेकाजग्रहणमित्यस्य मत्व
यग्रहणमपनीयत तत्स्थाने ऽनेकाच इति वाच्यम् इति पक्षाश्रयणात्॥ दयायास इतिसूत्रे आसिग्रहणेनाकार एदेश मनेति कल्प्यत
संभवेन गुर्वादेरनृच्छ इत्येव सिद्धे गुरुन्यासेन मुख्यगुरुमत एव ग्रहणाच्च॥ ऊर्णोते की विषती ति॥ यथेष्टं नामधातुष्वित्युक्तेरिति
भावः॥ अंत्येति तदुत्तरभेवाजादेस्त्वाद्येत रत्येत्युक्तेरिति भावः॥ योग्यकालोत्तरमेवेति॥ न तु ततः प्रागित्यर्थः॥ प्रकृते तु तत्समका
लं ततः प्रागिति नैषेति भावः॥ शास्त्राद्वा धेति॥ द्विशास्त्रं वा धेत्यर्थः॥ सूत्रारंभसामर्थ्यादेवेति॥ ननु इयेशेत्यादौ परत्वाद्गुणे त
तो द्वित्वे वार्णादांगमिति ततो ह्रस्वत्वे आदिशादचः पूर्वत्वेन तस्य यङिः स्थानिवत्त्वाप्रवृत्तौ अस्य सूत्रस्य चारितार्थ्यात्कथमेतत्
न चात्र चारितार्थ्योदुक्तपरिभाषाज्ञापनमप्यसंभवीति वाच्यं॥ एतत्परिभाषासिद्धेः पूर्वं अभ्यासेंतरंगत्वात्॥ ह्रस्वात्यागयादेशे
इवर्णोवर्णयोरभावेनात्र एतदप्रवृत्तेः॥ वाहर्डडि त्यादावि वांगसंज्ञा ह्यारंगाश्रि त प्रत्ययनिमित्तकत्वेन वा अयादेशापेक्षयाह्र
स्वापेक्षस्य बहिरंगत्वात्॥ इतरथा परिभाषाज्ञापकत्वमप्यसंभवं प्राप्नोतीति चेत्॥ अत्र केचित्॥ ज्ञापकपरभाष्यप्रामाण्येन ननु
अस्यर्थमेतत्स्यात्॥ नैकमुदाहरणम्॥ असवर्णग्रहणं प्रयोजयतीति भाष्येण चानभिधानमिति तन्न॥ ज्ञापकपरं भाष्यं न पूर्वं वि
प्रतिषेधेन द्विर्वचनप्रवृत्तिमाश्रित्य प्रवृत्तं॥ तथाहि द्विर्वचनं यणयवादेशेभ्य इति पूर्वविप्रतिषेधं पठित्वा ततः पठितस्य द्वि
र्वचनात्प्रसारणत्वेत्यादि परविप्रतिषेधस्येयायेति प्रयोजनमुपन्यस्य न तु चात्रास्तु द्विर्वचने कृते परस्य गुणवृद्धी भविष्यत इति

त्रि० परविप्रतिषेधप्रयोजने दर्शिते ततो न सिध्यति अंतरंगत्वात्सवर्णदीर्घत्वं प्राप्नोतीति शंकायां वार्णादांगं बलीय इति गुणवृद्धी भविष्यतः किं वक्तव्यमेतत्
गा० नहि आचार्यप्रवृत्तिर्ज्ञापयति वार्णादांगं बलीय इति यदयमसवर्णग्रहणं करोतीति समाहितं ॥ तथा चेयेथे सत्रापि गुणवृद्धी बाधित्वा पूर्वविप्रति
२२ षेधेन द्विर्वचने पश्चात्प्राप्तगुणवृद्धी बाधित्वा अंतरंगत्वात्सवर्णदीर्घे कृ एतस्य चारितार्थ्यं येनाऽनभिधानं कल्प्येत् ॥ इदं तु बोध्यम पर्यंतानुवृत्ति
वदुवर्णानुवृत्तिरेव उक्तार्थयोर्ज्ञापिका ॥ न चोवोणेत्याद्यर्थसा अ मंत्रे इति निषेधेन इजादेरित्याम्रोऽप्रवृत्तेरिति वाच्यं ॥ इयङादिप्रकरणेत ।
न्वादीनां छंदस्युपसंख्यानमिति वार्तिकेनो वङ्प्रवृत्तेः इत्यदोषात् ॥ स्पष्टं चेदं भाष्यकैय्यटयोरिति ॥ सामान्यापेक्षमिति ॥ तत्फलं तु अतूतवत्
अबीभवत् आरतीत्यादि सिद्धिः ॥ नन्वनेनैव सिद्धौ पूर्वस्यैव विधावित्यस्य कथमारतुरिति प्रयोजनं संगच्छतां ॥ न च ज्ञापकस्य सजातीयापे ।
स्त्वेनोत्तरखंडस्थऋवर्णान्याचूस्थानिकादेशस्याजातमकस्य वा आदेशस्य ग्रहणेन अभ्यासत्वेनाभ्यासोद्देश्यकस्य ग्रहणेन वा तत्संग
तिः ॥ अववर्तत् आरतीत्यनयोरसिध्यापत्तेरिति चेन्न ॥ अंत्येदीर्घविधौ तन्निषेधेन आद्येउवर्णादेशत्वाभावेन णावच इति निषेधाप्रवृत्तौ ।
परत्वाद्गुणे पश्चाद्द्वित्वे आदेशश्च ः पूर्वस्य विधिसद्भावेन स्थानिवत्वाप्रवृत्तेरित्युक्तिरीतिमालंब्यैव पूर्वस्यैव विधावित्यस्यारतुरिति प्रयो
जनोद्भावनसंगतेरिति ॥ आरतीति ॥ अतूतवत् अनूनवत् इत्यादौ दीर्घो लघोरिति दीर्घोऽप्यत एवेति बोध्यं ॥ तस्य त्वदीदयत् इत्यादौ श०
चारितार्थ्यम् ॥ दीर्घविधाविति ॥ ननु स्वरदीर्घयलोपेषु लोपाजादेशस्य न स्थानिवत् इति नियमेन कथमत्र निषेधः किंच रिर्यतु । २२
रित्यादौ उक्तनियमेन न पदांतेति निषेधस्य बाधेपि पूर्वत्रासिद्ध इति निषेधस्याभ्यासकार्यप्रतिबंधकीभूतस्य तु उक्तनिषेधस्य च
प्रवृत्तौ तदसिध्योक्तं नियमेन तयोरपि निषेधयोर्निवृत्तेर्वक्तव्यतया आरतीत्यादौ अभ्यासकार्यप्रतिबं — — — — — —

धिके तस्याप्रवृत्तौ दीर्घानापत्तिरेवेति चेन्न ॥ उक्तवार्तिके दीर्घग्रहणस्य हि प्रयोजने रिर्यतुक्रियोरिति ॥ तत्राद्येऽभ्यासस्य नव्यरीत्या
अधातुत्वेन धातोरेव दीर्घविधानेन ॥ अंत्ये उणादीनामव्युत्पन्नत्वेन दोषाभावे तत्र दीर्घग्रहणस्यैवाकर्तव्यत्वात् ॥ यद्वोक्तवार्ति
केव्याख्यानादाष्टमिकदीर्घस्यैव ग्रहणमिति न दोषः ॥ वस्तुतस्तु पूर्वोक्तरीत्योपधायां चेति सत्राभ्यास जिघ्रि इति निषेधबलेन
तत्र साभ्यासस्यैव धातुत्वेन चरि र्यतुरित्यादौ दीर्घवारणार्थं उक्तवार्तिके दीर्घग्रहणमावश्यकं ॥ किंच न पदांतेत्यत्र साप्तमि
कदीर्घस्यापि त्वयाग्रहीतत्वेन श्रायसाविस्यादाविवहंसाविस्यादौ सांतस्यैकदेशविकृतन्यायेनांतरंगत्वात्सांतमहत इति दी
र्घवारणायोक्तवार्तिके दीर्घग्रहणं ॥ तेन साप्तमिकस्यापि ग्रहणमित्युभयथावश्यकं ॥ कथं तर्हि आरतीत्यादौ दीर्घ इति चेदि
स्यं ॥ उक्तवार्तिके दीर्घपदेन उपधादीर्घस्यैव ग्रहणेनादोषात् ॥ न पदांतेति सूत्रे पूर्वत्रासिद्धे नेत्यवष्टभ्य वरे यलोपस्वरवर्जं
द्विर्वचनादीनि न पाठ्यानि इति भाष्योक्तरीत्यादरेणे तु सूत्रे वार्तिके च दीर्घग्रहणं व्यर्थमेव वार्तिके तस्य सूत्रस्य दीर्घग्रहण
मूलकत्वस्य तत्रैव भाष्योक्तेः ॥ रिर्यतु रित्याद्यर्थं तु उपधायां चेति सूत्रे अभ्यासप्रतिषेधस्यैव वार्तिककृतोक्तेरदोषः ॥ स च
दीर्घग्रहणे कृतेप्यावश्यक इति तत्रैव कैयटेनोक्तं ॥ युक्तं चैतत् ॥ अन्यथाहंसाविस्यादौ स्वरदीर्घत्वस्य चारितार्थ्ये नाभ्यासका
र्यप्रतिबंधिकेति निषेधबलेन पूर्वत्रासिद्धमिसनेन च मापितस्थानिवत्वाप्रवृत्तेस्तेन वा धेमानाभावादिति दिक् ॥ अरिमिया
दिति ॥ वस्तुतस्तु प्रतिबंधकेति न निवेश्यं फलाभावात् ॥ अरिमियादित्यत्र तु अंतरंगत्वादियङिः न दोषः ॥ तन्निवेशे लस्या
सिद्धेश्च ॥ तथा हि उपधाकार्ये द्वित्वात्प्रबलं इत्यस्योत्तरखंडेवर्णाभावेन णावच इति निषेधाविषये आसउपवेशने इति अस्य

त्रि० माभवानटिटत् इत्यादौ चारितार्थ्येनाचकाणत् इत्यादौ हिल्वात्पूर्वं णावचइतिनिषेधेन टेर्भावे हिल्वोत्तरं टेर्द्वौ काण्यादीनां वेति
गा० विकल्पेन ह्रस्वाभावे तस्य स्थानिवत्त्वेन सन्वद्भावाद्यापत्तेः॥ एवं कट धातोर्णिचि चङि अचकाटत् इत्यादावपि॥ अथमक्तस्यै
२३ काचूत्रे तस्य ज्येष्ठः श्रेष्ठ इति प्रयोजनमुपन्यस्याकारोच्चारणसामर्थ्याल्लोपेनेति तत्सूत्रस्य भाष्येण ओः पुयण्जिषु वचनं।
ज्ञापकं णौ स्थानिवत्त्वस्य यद्येतत् ज्ञाप्यतेऽचिकीर्तत् इत्यत्रापि प्राप्नोति न तुल्यजातीयस्य ज्ञापकं कस्य तुल्यजातीयः य
याजातीयाः पुयण्जपः कथंजातीयाश्चैतेऽवर्णपरा इति द्विर्वचनेचीति सूत्रस्य भाष्येण च यत्र द्विरुक्तोपरखंडेऽवर्णस्था
निको वर्णः श्रूयते तत्रैव णावचआदेशो नेति निषेधः॥ अन्यथात्र शब्दाण्णिचि चङि णावचइति निषेधेन टिलोपाभावेऽभ्या
से श्रवणार्थत्वेनाकारोच्चारणवैयर्थ्यमिति तदसंगतिः॥ ओणनदिति लसाध्वेव॥ तथा चाचकाणदित्यत्र णावचइति
निषेधामहत्त्वात्पूर्वं टेर्द्वौ पश्चाद्धित्वे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावान्न स्थानिवद्भाव इति चेन्न॥ उक्तभाष्याभ्यामुत्तरखं
डे परिनिष्ठिते वर्णः श्रूयते इत्येतस्यैतत्कल्पनेपि उवर्णस्थानिकेति निवेशे मानाभावात्॥ णौ च संश्चङोरिति विहितस्य गाङ-
स्तु नानेन न निषेधः॥ निषेधे सति अजादेर्द्वितीयस्येति णिच एव द्वित्वे उत्तरखंडे वर्णपरत्वाभावात्॥ किंच इटकिटिकिटीत्यत्र प्र
म्लिशब्दाद्विटि अतुसिद्धित्वे वार्णादांगमित्युत्तरखंडे एरनेकाच इति यणि तस्य स्थानिवत्त्वेनाभ्यासे यणापत्तिरिति दिक्॥ अ
न्ये तु उवर्णादेशत्वाभावेन णावचइति निषेधाप्रवृत्तौ परत्वात् वृद्धौ ततो द्विर्वचने आदिशादचः पूर्वस्य विधिरिति अचकाण
दित्यादिसिद्धिः॥ ईयतुरित्यादौ तु स्थानिवद्भावेनेकारबुद्धौ पर्युदासन्यायलब्धासवर्णाजरूपनिमित्ताभावेन न यण्॥ सव

र्णदीर्घस्तु न॥ पूर्वस्यैव विधानाभावात्॥ यद्वा वार्णादांगमित्यस्यानित्यत्वेन पूर्वमंतरंगत्वात्सवर्णदीर्घे इयङि रूपसिद्धिरित्याहुः॥ यत्तु
अभ्यासत्वपर्याप्त्यधिकरणोद्देश्यके कार्ये न स्थानिवत्त्वमित्येव ज्ञाप्यते॥ तेनारिप्रति अरिप्रियात इत्यत्र यलोपे यणीङोः स्थानिव
त्वं यलोपस्यातथात्वात्॥ एवं च प्रतिबंधिकेति व्यर्थमेव॥ अरिप्रियादित्यत्रेयङादेशस्यातथात्वेनादोषात्॥ तेन यत्र यातिरित्यत्र
यङ्कारलोपस्य स्थानिवत्त्वेन पुनरातोलोपो न शंक्यः॥ आल्लोपस्य स्थानिवत्त्वादिति मनोरमाग्रंथोपि व्याख्यात इति तच्चिंत्यं सं
॥ विभावयिषते इत्यादौ इत्वाद्यनापत्तेरिति दिक्॥ अंगसंबंधीति॥ इदं समानकार्यित्वे एवेति पूर्वेण गतार्थं॥ अनित्येति॥ ननु
तुकशपोर्न समानकार्यित्वमिति वार्णपरिभाषाया अप्रवृत्तावंतरंगत्वात्तुकि तन्निवृत्तये सतुक्निर्देश आवश्यक इति कथं अनि
त्यत्वज्ञापकमिति चेन्न॥ एतस्यैव परमसिद्धांतत्वेन पूर्वोक्तस्य सर्वस्यैतन्मूलकत्वेनादोषात्॥ जातेऽन्तरंगे तस्येति॥ प्राप्तस्ये
ति शेषः॥ अंतरंगे असिद्धत्वमिति प्रकृतमंतरंगमिति चानुवर्तते॥ तथा चांतरंगे जाते प्राप्तस्य बहिरंगस्यांतरंगे कर्तव्येऽसिद्ध
त्वं न बाध्यते इत्यर्थः संपद्यते॥ एतेन जातेऽन्तरंगे बहिरंगासिद्धत्वस्य पूर्वपक्षिणानंगीकारेण तत्खंडनं प्रकृतानुपयुक्तमित्यपास्तं
॥ निमित्तविनाशसंभावनापीति॥ एतेनैव सामंजस्ये तद्द्वारैव निमित्तविनाशसत्त्वेनेत्यादि पूर्वोक्तं निष्फलमिति बोध्यं॥ अत्र नि
मित्तत्वं कार्यिसाधारणं बोध्यं तेन सोऽर्हल्ङ्याब्भ्यो लोपकार्यित्वेपि न क्षतिः॥ ननु निमित्तविनाशसंभावनापि यद्यन्तत्प्रवृत्तौ नि
मित्तं तदीत्वो लोपो न इति सूत्रे तपरकरणं व्यर्थमित्यत आह॥ तपरकरणं त्विति॥ नैमित्तिकस्याप्यपाय इति॥ स्थानिनः स्थितिश्चे
त्यपि बोध्यं॥ समर्थानामितीति॥ ननु समर्थग्रहणेन समर्थयत्तिद्धितोत्पादनेपि पश्चात्प्राप्तसवर्णदीर्घनिवृत्तेः कथं निराक्रियेति चेन्न

त्रि० ॥समर्थात द्वितः साधुरित्यर्थाश्रयणात्॥प्रक्षालनाद्धि पंकस्येति न्यायेन कृत्वा निवर्तनात्करणं लघु इति दीक्षितोक्तं दूषयति॥भावी
गा० ति॥तदाशयइत्युत्तरमाहुरित्तिशेषः॥तत्र च पूर्वोक्तस्य केचिदित्यस्यान्वयः॥प्रतिपदविधित्वादिति॥ननु नियमशास्त्राणां विधि
२४ मुखेनैव प्रवृत्तिरितिसिद्धांतादि द्विविधोवस्वेकाजादित्यत्र वस्वित्युक्ते रिटोपि प्रतिपदविधित्वमिति चेन्न॥एतत्सूत्रस्थवस्वेकाजे
त्यस्यानुवादकत्वेन विधित्वाभावात॥यस्य च विधित्वं आर्द्धधातुके स्यस्य न तस्य प्रतिपदविधित्वं॥तत्राप्येषैव गतिः अन्य
थावस्वेकाजित्यस्य वलादित्वानिमित्तकतया तमादाय कृतव्यूहपरिभाषा प्रवृत्त्यसंभवात्॥वाधकत्वइति॥पश्चात्प्राप्त
स्यापीतिशेषः॥ननु इयायेत्यादौ प्रतिपदोक्तेनेणो यणित्यादिना हि ध्यादेर्वाधापत्तिः॥किंच शेषाद्धि भाषेत्यत्र शेषात् ग्रहणा
भावे कर्त्तृभावे सावकाशानां समासांतानां प्रतिपदविहितानां परत्वात्कपा वाध इति तत्तत्र त्रस्थभाष्यासंगतिरिति चेन्न॥प्रति
पदविधेर्बलवत्त्वस्य क्वाचित्कत्वेनादोषात॥यद्वा वस्वेकाजिति सूत्रे वलादेरिति वर्तते॥तच्च प्रक्रियायां वसोर्वलादित्वाव्य
भिचारात परिनिष्ठिते वलादेरित्यर्थकं॥तथा च परिनिष्ठिते वलादेर्वसोरेवेति नियमेन संप्रसारणे न नंक्ष्यमाणवलादेरिट्व्या
वर्तनान्न दोषः॥ततो भ्रमवारणायेति॥वस्तुतः समर्थग्रहणं अंतरंगस्यापि संधिकार्यादेः पूर्वमप्रवृत्तिज्ञापनाय तेन समर्था ए०
धिकारबहिर्भूतत्तद्धितानामकृतसंधेरुत्पत्त्याश्वकंपितो वायुदत्तो वायुक इत्यादिसिद्धिरिति दिक्॥एवं परनित्यांतरंगाणां व २४
लावलेनिरूप्य क्रमप्राप्तापवादस्य बलवत्त्वं निरूपयति॥अंतरंगादिति भावेक्त इति॥इदं चिंत्यं॥नपुंसके भावे क्त इत्यस्यापि
अकर्मकेभ्य एव प्रवृत्तेर्णेरध्ययने वृत्तमिति सूत्रे भाष्यकैयटयोः स्पष्टमुक्तत्वात्॥ननु भ्रांतं देशं इत्यादि प्रयोगात् अजर्ये॥

संगतमिति सूत्रस्थभाष्याच्च गत्यर्थेभ्यः सकर्मकेभ्योपि भावे क्तो भवत्येवेति चेत्सत्यं॥एतस्य आश्लिष्टगत्यागत्यर्थत्वेपि गत्यर्थपदे
नाग्रहणात्॥अतएव सुखं प्राप्त इत्यादौ कर्तरिक्त आदिकर्मणि वो ध्य इत्युक्तं नव्यैः॥अतएव ग्रामं प्रापयति देवदत्तेनेत्येवेति
ध्वनितं न गतीति सूत्रे भाष्ये॥तस्माद्येनेति करणे तृतीयाशास्त्रं च पत्यदार्थ इत्येव सम्यक्॥विशेषशास्त्रोद्देश्येति॥ननु उ
ऋत इत्सरामपवादो न स्यात् इति चेदत्र केचित्॥क्वित्भिन्नधातुविहितप्रत्यय परकोगावयवत्वविशिष्टोपधेकृत्वस्य
सामान्यसंभवादिति तन्न॥एवमपि इत्सरां तदवच्छिन्नोद्देश्यकत्वाभावात् तस्मादेकशास्त्रस्य वाध्यत्वे इदं॥अनेकेषां वा
ध्यत्वे तु तत्प्राप्तियोग्यविषये व्याप्तिताप्येवतंत्रमिति दिक्॥अत्र पाठद्वयं वाधकत्वे वीजमित्युत्तरं॥अतएवायादय इत्यार
भ्यसमप्रमेवेत्यंतपाठोत्तरं किं चानेन न्यायेनेत्यादिरेकः॥वैपरीत्येन चापरः॥तत्रांत्य एव युक्तः॥एवमत्रेत्यादिग्रंथानुरोधात्॥
अनवकाशत्वेनेति॥आनर्थक्येनेत्यर्थः॥एतत्कथनेति॥येन नाप्राप्तिन्यायकथनेत्यर्थः॥स्यादयः प्राप्नुवंतिइति॥न च सार्व
धातुकनिमित्तकस्य नित्यस्य आयादेः स्यादिभिर्वाधे वैकल्पिका आयादयो भविष्यंतीति इष्टापादनमेतदिति वाच्यं॥प्रत्ययः परः
प्रयोक्तव्य एवेत्यर्थस्य नपुंसकसज्ञलचइति सूत्रस्थभाष्यकैयटाभ्यां लाभेन धातुविकरणयोर्मध्ये निवेशासंभवेन स्यादि
षुकृतेषु वैकल्पिकाप्रवृत्तेः॥गोपाय्यादित्यादौ तु सार्वधातुकसंभावनाव्यतिरेकग्रहेण पूर्वमेवायादिषु कृतेषु तिङादय इति
न कश्चित्दोषः॥अनवकाशइति॥ आयादयो वा सार्वधातुके नित्यं इति न्याससुपकम्य्पेदं भाष्यं प्रवृत्तं इति न लिङादावकाशः॥इयं
चोक्तिस्तटस्थस्य न सिद्धांतिनः॥गोपायिष्यति इत्याद्यसिद्धेः॥शप्यादिरिति॥स्यादिग्रहणं दृष्टांतार्थं यथास्यादितिप्राप्नोतिन

तथाशब्लिसर्थः॥अत्रेति।अजादेर्द्वितीयस्येत्यत्र तत्प्रत्युतरं प्रथमैकाचूमद्धसुत्तरंडत्सर्गेस्तस्य सन्निधान विशेष कृत्स्नं शान्तरकृतो भेदः॥ किंचि
त्करइतिभावः॥विन्मतोर्लुगिति।परेतुनत्तिस्विति निषेधाज्ज्ञापकाद्विषयभेदेनापवादेन वाधः॥ किंतु विषये कोप्ये एव विष
यस्तुसाक्षात्कार्यभागेवेतिननियमः॥ किंतुआगमादेशविधोषष्ठ्यंतपदोपात्तउद्देश्यः॥ तथतत्रकथमन्यस्योच्यमानम
न्यस्यवाधकंस्यात्॥इत्याशंक्यतत्रापितक्रकौंडिन्यन्यायेनवाधकत्वस्यापकभाष्येन्यस्येति॥ अस्य साक्षात्कार्यभाजइ स
र्थः॥प्रथमद्वितीयद्विर्वचनयोः॥पूर्वोतरपद व ड्योः आदिहलशेषस्वयशेषयोः ऐजहधोश्च साक्षात्कार्यिणो भेदेपिधा
तोरंगस्येतिषष्ठ्यंतनिर्दिष्टोविषयो नभिन्नः॥विकारकृतंचनविषयान्यत्वंइतिनविन्मतोर्लुक्‌टिलोपमात्रस्यवाधकइतिमहत्त्वै
कात्सूत्रस्यभाष्यविरोधश्चापिद्यते दिगित्तदिम्यादेशेनद्वित्ववाधनंइतिभाष्यविरोधः॥त्रयाणामित्यत्रतुइकारांतत्वनिमित्तक
दीर्घस्यत्रयादेशेनवाधेपि॥अदंतत्वनिमित्तकस्यतस्यावाधान्नदोषः॥ ॥यद्वात्रसुपिचेतिदीर्घः॥कष्टापेतिनिर्देशेनदीर्घविषयेसन्नि
पातपरिभाषायाअप्रवृत्तिः॥अतएवानेमुगितसूत्रेमुडितिन्यासे पचमानमित्यत्रातोदीर्घोयञितिदीर्घआपादितः॥अतएवचनामी
तिसूत्रेभाष्येप्रथमोपस्थितमदंतंविहायअग्नीनांइंद्रूनांइत्युदाहरणमुपन्यस्तंभाष्ये॥वस्तुतोनुटःपूर्वमेवत्रयादेशइतिनकश्चि
द्दोषः॥अतएवनय्वाभ्यांशरपूर्वाइतिसूत्रयोरेकस्मिन्नंगेएकाभ्यासेइत्यादिनाविषयैक्यमुपपादितंकैय्यटेन॥अतएवनामीति
सूत्रेभाष्येआमीतिन्यासेअग्नीनामित्यादौनित्यत्वाद्दीर्घवचनाद्भूतपूर्वगत्यानुडित्युक्तं॥अतोभिसइतिसूत्रेभाष्येचपरत्वादैत्वमा
शंक्यनित्यत्वादेत्वभावइत्युक्तं॥ऋतोभारद्वाजेतिसूत्रेच भाष्येजहर्थेत्यादौगुणेरपरत्वेचानजंतत्वात्प्रतिषेधोनप्राप्नोतीत्युक्तम्॥ 

स्वरितोवेतिसूत्रेचभाष्येकुमार्यैइत्यादौयणुत्तरमाडुक्तः॥विषयभेदेप्यपवादत्वेचतदसंगतिःस्पष्टैव॥अतएवचसावनडुहइत्यनेनह
लड्याद्लोपस्यत्रेस्त्रयइत्यनेननुट। शाहौध्वसोरित्याभ्यांधिभावस्यऋदुशनइत्यनङाहलड्याद्लोपस्यहृस्वस्यगुणइत्यनेन
संबुद्धिलोपस्यअम्संबुद्धावित्यनेनहलड्याद्लोपस्यइडसतीत्यनेनगुणस्यणौचङीत्यनेनद्वित्वस्यहंतेर्हिंसायांयङिघ्नीभावे
नद्वित्वस्यचनवाधः॥हृस्वस्यणावंगंविषयःद्वित्वस्यण्यंतमितिविषयभेदात्॥यङंतस्यद्वित्वंयङिपरतोहंतेर्घ्नीभावइतिविष
यभेदात्॥नचपवमानइत्यत्रमुकाद्यादेशस्यवाधोनस्यादितिवाच्यं॥अतइतितप्रकरणे नैवतदप्रवृत्तेः॥पचमानइत्यत्रता
स्यनुदात्तेत् इतिस्वरस्तुउपदेशग्रहणात्सुलभः॥अतएवपचावइत्यादौस्वरसिद्धिः॥एतेनात इतितपरकरणान्नेतितच्चिं
त्यं॥यदागमाइत्यतद्व्यस्यतपरत्वेनाप्रवृत्तेः॥अतएवादुपदेशात्परत्वप्रयुक्तस्वरसिद्धिरितिलटःशतृइतिसूत्रशेखरो
क्तमपास्तं॥नन्वेवंगाङ्कुटादीत्यनेनद्वित्वस्याङ्गस्येतिदीर्घेणद्वित्वस्ययस्यहलइत्यनेनातोलोपस्यतदोरित्यनेनत्यदाद्यत्वस्य
पथिमथ्यृभुक्षामात्वेनइतोत् इतिइत्वस्यचवाधापत्तिः॥त्वदुक्तरीत्याविषयाभेदादितिचेन्न॥आर्धधातुकइत्यस्यविषयसप्तमीत्वे
नगाङोलिटःपूर्वमेवप्रवृत्तेः॥अङ्गस्येत्यस्यतुसनिपरतोंगंविषयःस्यन्यडोरित्यस्यतुसन्नंतमितिविषयभेदात्॥यस्यहलइत्यत्रव
र्णग्रहणेनांगसंज्ञानिमित्तस्ययकारस्यलोपविधानात्॥एततदोरितिसुलोपविधानेनात्वस्यसत्वाबाध्यत्वकल्पनात्॥सुत्वस्य
नपुंसकेसावपिसत्वेनसार्वनामस्थानत्वाव्याप्यत्वात्॥नन्वेवंअनडुहःसावाम्प्रतिषेधः॥नुमोऽनवकाशत्वात् इतिसावनडुहइ
तिभाष्यवार्तिकविरोधइतिचेत्सत्यंएततदोरित्यनेनसामान्यतएवसुनिमित्तकविभिन्नविभिन्नस्थानिकादेशयोर्बाध्यबाधकभावाभावो

वि०
गा०
२६

...एवंप्रत्ययविधौ पंचम्यंतपदोपात्तविषयः संज्ञाविधौ प्रत्ययनाश...

धकाभावाभावज्ञापनेनादोषात्॥ एवमन्येपिदोषाः परिहरणीयाः॥ एवंप्रत्ययविधौ पंचम्यंतपदोपात्तविषयः संज्ञाविधौ प्रत्ययना... भ्यंतपदोपात्तद्विषयेतद्यस्तं... हृटकेयदिसुवंततद्यिभमितिभसंज्ञ
पदोपात्तः॥ तदैक्येएवचतत्रोत्सर्गस्यापवाद वाध्यत्वं॥ अतएवसुराजपुरुषायेत्यादौतद्धृटकेयदिसुवंततद्यिभमितिभसंज्ञ
याराजन्शब्दस्यपदत्वबाधोनेतिप्राहुः॥ तदाभवत्येवेति॥ अतएवच्छ्वोःशूडितिसूत्रेभाष्येऊठश्चित्वपक्षेऊठिकृतेलोपोव्योरि
तिलोपइत्युक्तं एवंगोमानित्यादौ अत्वसंतस्येतिदीर्घेनुम्सिद्धिः॥ लोकेपिब्राह्मणभोज्यंतांमाठरकौंडिन्यौपरिवेविषामितिप
रिवेष्टत्वेनविहिताव पितौपरिवेषणोत्तरंभुंजाते॥ इदंविचार्यते॥ एतन्न्यायमहत्तौबाधकाबाधितनित्यप्राप्तिस्तंत्रं आहोस्वि
त्प्राप्तिमात्रमिति॥ अत्रोत्सप क्षएवयुक्त इ ...मतीमः॥ ब्राह्मणेभ्योदधिदीयतांतक्रंकौंडिन्यायेत्युक्तेपिएत्रौचरिता
र्थेनापितक्रदाने दधिदानस्यबाधदर्शनात्॥ अतएवाभ्यासस्यासवर्णइत्यस्यवाणींदंगमितिपरिभाषाज्ञापकत्वोपपादना
वसरेयेननाप्राप्तिन्यायेनयणएवायमपवादः॥ ननुसवर्णदीर्घस्येत्युक्तंकैय्यटेन॥ अन्यथासवर्णेचितदप्राप्तेस्तदसंगतिः॥ नन्वे
वंऊदुपधायागोहइतिसूत्रस्थभाष्यविरोधः॥ तत्रहिविकृतनिर्देशप्रत्याख्यानायऊदितिप्रश्लिष्यनिजुगुहतुरित्यादौच

ए०
२६

रितार्थस्यह्रस्वोकारस्य गूहयतीत्यादौपरत्वाद्गुणेनबाधउक्तः॥ उक्तरीत्यातुनिजुगूहतुरित्यादावपिगुणस्यप्राप्तिसत्वेनउक्त
स्यापवादत्वाद्धिमतिषेधासंगतिः॥ किंचेलोत्वाभ्यांगुणवृद्धीविप्रतिषेधेनेतिवार्तिकासंगतिः॥ निगीर्णमित्यादावपिगुणप्रा
प्राप्तिमात्रसत्वेनेत्वोत्वयोर्गुणापवादत्वात्॥ किंचचिण्वद्भावेउपदेशिवचनंऋकारगुणबलीयस्त्वात्॥ इतिस्यसिचूत्रस्य
वार्तिकासंगतिः॥ कारिषीष्टेत्यादौउश्चेतिकित्वेनगुणनिषेधेपिप्राप्तिमात्रसत्वेनचिण्वद्भावस्यगुणापवादत्वात्॥ एवंनलो

पसूत्रेभाष्येसंबुद्धौचरितार्थस्यरुत्वस्य असिद्धत्वान्नलोपमाशंक्यरूपरात्रीतिरुत्वविधानात्ज्ञापकाद्रुत्वविषयेननलोपोनेत्यु
क्तंतदपिविरुद्धं संबुद्धौनिषिद्धेपिप्राप्तिमात्रस्यसत्वात्इतिचेन्न ॥ स्यसिचूत्रेउपदेशग्रहणेनोत्सर्गनिषेधस्थलेचारितार्थ्य
मात्रेणोत्सर्गसमबलताज्ञापनात्॥ एतेनवस्तुतःसत्यपिसंभवेबाधनंभवतीतिभाष्यसिद्धांतात्रुत्वरत्वेननलोपापवादभू
तेएव॥ निषेधविषयेपिप्राप्तिमात्रस्य सत्वेनयेननाप्राप्तिन्यायविषयसत्वात्॥ निषेधेनापितस्यनिषेधइत्यन्यदितिशे
खरोक्तमपास्तं॥ परेतुउक्तभाष्यवार्तिकादिभ्यःबाधकाबाधितप्राप्तिरेवापवादत्वेतंत्रं॥ उत्सर्गनिषेधस्थलेचारितार्थ्यमा
त्रेणसमबलत्वमितिनयुक्तं॥ ब्राह्मणेभ्योदधिदीयतांएत्रौनदीयतांतक्रंकौंडिन्यायेत्यत्रापिउक्तभाष्यादिप्रामाण्येना
पवादत्वप्रतिपत्तिरित्याहुः॥ इदंविचार्यते॥ त्रियाद्यांतक्रकौंडिन्यन्यायेनवाध्यबाधकभावोस्तिनवाइति॥ तत्राद्यएव
युक्तः॥ अभियुक्तैस्त्वस्यजश्चापवादत्वोक्तेः॥ घत्वरुत्वादीनांढत्वजश्त्वाद्यपवादत्वभाष्यकारादिभिरुक्तेश्च॥ अतएव
रहाभ्यामितिश्रुतेननिमित्तत्वेनकार्यित्ववाधःसंगच्छते॥ अतएवरुत्वेननलोपबाधसिद्धिः ॥ परेतुअसिद्धविषयेनतक्र
कौंडिन्यन्यायः॥ असिद्धेनसिद्धस्यबाधासंभवात्॥ अतएवबुग्युटावुवङ्यणोःसिद्धौवक्तव्यौइत्युक्तं॥ निरवकाशत्वेतु
बाधकत्वमस्त्येव॥ वचनप्रामाण्यात्॥ अतएवपूर्वत्रासिद्धमितिसूत्रेभाष्येयद्येवंदोग्धादोग्धुधत्वस्यासिद्धत्वाद्धत्वं
प्राप्नोति॥ काष्ठतट्संयोगादिलोपस्यासिद्धत्वात्संयोगांतलोपःप्राप्नोति॥ अपवादोवचनप्रामाण्यात्॥ अनव काशत्वे
तौविधितौवचनप्रामाण्याद्भविष्यतइत्युक्तं॥ तथानलोपःप्रातिपदिकेतिसूत्रेभाष्येअनवकाशोरुर्नलोपंबाधिष्य

त्रि० ते॥ सावकाशो रुः कोवकाशः अनंस्वद् इत्याद्युक्तमुपपद्यते अत एव रथीतरइत्यत्र ईत्वस्यासिद्धत्वान्नलोपे पश्चाद्दीर्घ इथिनइतीत्वं
गा० अन्यथा नलोपं बाधित्वा नकारस्येत्वे तस्यासिद्धत्वात्सवर्णदीर्घप्राप्तौ तदसिद्धिः॥ एवमक्षण्वतइत्यत्र नलोपसिद्धिः॥ त्वद्रीत्यादौ तु
२७ अनोनुडित्यनेन लोपस्य बाधापत्तिः॥ एतेन जश्त्वमिति प्रतीकमुपादाय बाधित्वेति शेषइति नव्योक्तमपास्तं॥ प्रतिरुच रां प्रकृति
चरइति न्यायेन रत्वमुडित्यादौ जश्त्वं बाधित्वा पकारस्यैवापतेश्च॥ पक्कमित्यादौ कुत्वमप्यत एव॥ त्वद्रीत्यादौ तु तदसिद्धिः॥ निमि
त्तत्वेन कार्यित्वबाधस्तु प्रकरणे एव प्रकरणस्यासिद्धत्वात्॥ नेमौर होकार्यिणौ इति भाष्यप्रामाण्यादिति॥ तत्वाप्ये वैवगतिः॥
अन्यथा धात्रंशःमद्रहृदइत्यत्र रेफस्य द्वित्वापत्तिः॥ अचः परत्वाभावेन निमित्तत्वानापत्या कार्यित्वस्य निरपवादत्वात् प्राह
॥ शैषिकोणिति॥ ननु वृद्धाच्छः स्यादिति चेन्न॥ लक्षणभूतेन शेषइत्यनेन निर्मिताद्यर्थेण विधाने पितदधिकारस्य सूत्रे स्तद
धिकारे विशिष्यं निर्दिष्टार्थे ष्वेव प्रसयविधानात्॥ यद्युदाहरणमिति॥ एतदुदाहरणं त्वचिरस्फटइति तन्नह्युत्सर्गे कृते न्य
कारभावेनास्याप्रवृत्तिः॥ यद्युदाहरणमिति॥ एतदुदाहरणं त्वेस्ये धत्पूष्टसु॥ अत्र हि पररूपे कृते स्याप्रवृत्तेः॥ उकन्यायेति॥
पूर्वोपस्थितबाधनने एकांश्यमिति उकन्यायेत्यर्थः॥ ङीपोविध्यभावायेति॥ ननु ज्ञापितेपि नचारितार्थ्यं॥ बहुव्रीहेरूधसइत्ये ग०
वसिद्धेपुनर्विधिवैय्यर्थ्यापाते नङीप एव विधिसिद्धेरिति चेन्न॥ नियमार्थत्वस्यादित्याशयात्॥ तथाहि॥ परिछेदं कार्यकादेशे २७
त्वं स्यादेरेव॥ असत्वार्थकादेशे दव्यादेरेव॥ तेन भूम्यादिरग्रेवणादेश्च नेति॥ अग्रेवणशब्दे ऽधिकरणशक्तिप्रधानतयासत्वा
र्थः॥ तद्वैयर्थ्यापत्तिरिति॥ ननु जक्षतीत्यादौ स्वसमप्राप्तिकांतादेशबाधनेनादादेशश्चरितार्थइति चेन्न॥ अत्राप्यभ्यस्तसं

ज्ञासमकालमेवांतादेशप्राप्तेः॥ नन्वभ्यस्तसंज्ञा धातुसंज्ञाप्रवृत्तिकाल एव तथा चोत्सर्गापवादयोः समकालमेवात्र प्राप्तिरिति चे
न्न॥ तथाप्यायन्नादिषु उपदेशिवद्वचनस्यांतादेशविषयकत्वस्याभ्यंगीकारेणांगसंज्ञातः पूर्वमेवांतादेशः अदादेशस्तु अंगसंज्ञो
त्तरमिति न समकालता अदादेशे तु नोपदेशिवद्भावः॥ दधतीत्याद्युतुरो धातु॥ अयंन्यायो नोपजीव्यविषये॥ इदितो नुमिति
सूत्रे कुंडेत्यादौ नुमोंगसंज्ञासापेक्षत्वेन तदर्थं क्तिनापादनस्य भाष्येकृतत्वात्॥ नन्वेवं कुंभकारइत्यादौ षष्ठ्यंतेन समासइति सि
द्धांतासंगतिः॥ उपपदसंज्ञाया विभक्तिसापेक्षत्वादिति चेन्न॥ कर्मण्यणित्यादीनां उपपदेतु द्विस्यएवाण्णादेर्विधानमिति तत्रै
व शब्देंदुशेखरे समाधानस्य करणात्॥ नन्वेवं ऋदुपदेभ्यइतिवार्तिकासंगतिः॥ अनेनैव न्यायेन गुणाप्रवृत्तिसंभवादिति चेन्न
तत्सकित्करणे प्रयोजनांतराभावः॥ इहतु संप्रसारणविधौकृतार्थत्वाद्दुर्बलेनातिदेशेन प्राप्यमाणो गुणनिषेधो दुर्बलत्वाद्वि
धिनासहनस्य धतइत्वसंयोगादिति सूत्रेवैपरीत्ये नैव समाधानस्य करणात्॥ यत्नं नव्यैरुक्तं विचतिवण्हा तीत्यादावतिदेशि
कङित्वस्य संप्रसारणे न कृतार्थत्वयातदनंतरं ते प्राप्तगुणे न त्वदुक्तरीत्याऽतिदेशप्राप्त गुणनिषेधबाधापत्तिरिति तन्न॥ कैय
टाशयानवबोधात्॥ तथाहि असंयोगादिति व्यपदेशातिदेशइत्यभिप्रेत्य हि ऋदुपधेभ्यइतिवार्तिकं प्रवृत्तम्॥ अन्यथा विभि
दतुरित्यादावि दुदुपदेपि पूर्वविप्रतिषेधस्यावश्यकतया कृधुपदेभ्यइत्युक्ति वैयर्थ्यं ऋदुपधे कित्वमनित्यं गुणे कृते संयोगोप
धत्वादिदुदुपधे तु तन्निस्यं गुणे कृतेपि कित्वप्रवृत्तिरिति हि तदाशयः॥ कार्यातिदेशे चेदुदुपधेपि गुणे कृते कार्याभावेनाति
देशाप्रवृत्तेः॥ कित्वस्यानित्यत्वमिति सर्वत्र साम्यमेव तथा च संप्रसारणविधौ कृतार्थत्वादिति न दुर्बलत्वे हेतुः किंतु स्वस्य कि

त्रि० त्वाद्वैषम्यं॥दुर्बलत्वंत्वतिदेशस्यानित्यत्वेनगुणस्यपरत्वात्विचतीत्यादौतुङित्त्वस्यनित्यत्वेनगुणापेक्षयाप्रबलत्वमेवातोनाति
गा० देशस्यदुर्बलत्वमिति॥परेतुयत्रोत्सर्गेणापवादनिमित्तविनाशस्तत्रनायंन्यायः॥दधतीत्यादौतुकार्यनाशेननिमित्तविनाशः॥प्र
२८ कृतेचगुणेननिमित्तकित्त्वस्यविनाशान्नायंन्यायः॥गुणेनकित्वनिमित्तासंयोगविघटनात्॥अतएवपुंयोगादितिसूत्रेभाष्येग
तिकारकोपपदानामित्यस्यव्याप्तीतिप्रयोजनमुक्तं॥टापस्त्वपवादङीनिमित्तादंतत्वविघटनेनैतन्न्यायाप्रवृत्तेः॥अतएवग
विष्टिरइत्यत्रगवीतिवचनादेवालुगित्युक्तमभियुक्तैः॥लुकावादेशाप्रवर्तनेनालुङ्निमित्तहलंतत्वविघटनात्॥तेनधनक्रीति
तिसिद्धं॥सुबंतेनसमासेप्यनेनन्यायेनटापोप्रवृत्तौङीषितदसिद्धमितिप्राहुः॥अतएवेति॥अनयोर्न्याययोर्विभिन्नाधिका
रिकत्वेपिफलतोभेदाभावादित्यर्थः॥अभ्याससंज्ञासूत्रस्यकैयटोक्तरीत्यातुतयोर्विभिन्नफलकत्वाद्विभिन्नार्थकत्वाच्चन
कदाचित्तावदित्यादिनाएकीकरणासंगतिः॥अस्याएनत्तुगुणमिति॥यथाऽपवादविषयसिद्धिस्तथोत्सर्गोभिनिविशते इ
त्येववक्तव्यंस्यात्॥नतुततइत्यादि॥तथोक्त्याहिपूर्वमुत्सर्गप्रवृत्तिर्गम्यतइतिभावः॥पूर्वप्रवृत्तिप्रयोजकमिति॥अतएवस्त्री
पीत्यादौपूर्वंदीर्घेनुमसिद्धिः॥हेरमेति॥अनड्वान्पंथागोमानित्याद्यनुरोधेनतत्ककौंडिन्यन्यायस्यहल्ङ्यादिलोपप्रवृत्तिर्नै ग०
तिभावः॥वाणीदांगंबलीयइतितुनविभिन्नस्थानिकत्वात्॥नापिविप्रतिषेधःचरितार्थयोरेवतदंगीकारात्॥नचएत्वेहल २८
ङ्यादिलोपस्याप्राप्त्यासमासांतैकपइवबाधएवात्रतथाचनबाधप्रयोजकमितिपूर्वग्रंथासंगतिरितिचेन्न॥लोपरूपका
र्येणैवात्रसंप्रधारणायाअभिप्रेतत्वेनतस्यात्रनबाधइतितात्पर्यात्॥नबाधंतइति॥यथाचसर्वेषांसमावेशस्तथाक्रमेणा॥

भ्यासकार्याणिकर्तव्यानीत्यर्थः॥अत्रचविकारपदेनलोपोपि॥अकिद्ग्रहणमिति॥ओहाकृत्यागेइत्यस्यव्याहृत्यर्थंतु॥नविद्य
तेकिद्यस्मिन्इतिबहुव्रीह्याश्रयणात्॥अनजंतत्वादिति॥अनवकाशेनबाधेपुनरुत्सर्गप्रवृत्तेरेवमुक्तं॥नन्वनुस्वारस्यैवा
नेनविधानात्तस्याश्रुपादात्कथमनजंतत्वमितिचेन्न॥यंयम्यतेहरिंयजतीत्यादौगुणाजस्त्वादिवारणायनुम्विधिसामर्थ्ये
नस्वनिवर्तकादेशेऽनुस्वारस्यानाक्षरसमाम्नायिकत्वकल्पनात्॥अट्कुप्वाङिति॥सूत्रेनुम्ग्रहणंपाठानित्यत्वेज्ञापक
मितितुनयुक्तं॥तस्यतत्रभाष्यकृत प्रत्याख्यानात्॥अत्रचविकारइतिआगमस्याप्युपलक्षणं॥अतोनुकोविकारत्वाभावे
पिनक्षति॥यद्वाबाध्यबाधकयोरन्यतरस्यविकारत्वमात्रेणैतत्परिभाषाप्रवृत्तिः॥ननुज्ञापितेपिनचारितार्थ्यंतुकिंकितोभ्या
सस्यानजंतत्वादितिचेन्न॥कित्त्वभाविनोत्रग्रहणेनादोषात्॥भाष्येतुचेच्छिद्यतेइत्यादौगुणाद्यर्थमभ्यासकार्येभ्योप्यधिक
रस्येनान्वयमाश्रित्यज्ञापकत्वंवर्णितंतत्रसत्यस्मिन्चारितार्थ्यमकष्टसाध्यमेव॥अस्यांचप्रतिपदोक्तपरिभाषयाऽभ्यासप
दोच्चारणेनविहितकार्यस्यैवग्रहणं तुक्चनतथातथान्वयस्यापीदमेवगमकं॥नन्वेवंविव्यथेइत्यादौउत्सर्गापवादभावा
त् पूर्वंहलादिःशेषेवस्यसंप्रसारणंस्यात्॥उभयेषांग्रहणसामर्थ्येनव च्यादीनांग्रह्यादीनांसंप्रसारणस्यहलादिःशेषापवा
दत्वेप्यसमत्वात्वेमानाभावात्॥किंचअभ्यासविकारेइत्यस्योभयेषांग्रहणसामर्थ्येनबाधेउभयेषांग्रहणेनसंप्रसारणेहला
दिःशेषानापत्तिरितिचेन्न॥अनयापरिभाषयाबाधकप्रवृत्तेर्बाध्यप्रवृत्तिविघटिकायाएवाभावोबोध्यतेनत्वपवादीनामपिउ
त्सर्गप्रवृत्त्युत्तरंप्रवृत्तिर्बोध्यते॥तथाचमीमांसतइत्यादौदीर्घेकृतेइत्त्वाप्रवृत्त्याबाधेत्वस्यपूर्वप्रवृत्तावपिविव्यथइत्यादौसंप्र

त्रि० सारणप्रवृत्तेरुत्सर्गमप्रवृत्य विघटकत्तयातस्यापवादत्वेन पूर्वप्रवृत्तिस्वीकारेबाधकाभावः॥एवमुभयेषांग्रहणेनपुनर्विधानेनाप
गा० वादसंप्रसारणस्य पूर्वप्रवृत्तावप्यनयावाधकत्वाभावबोधनाद्धलादिःशेषःसुलभः॥ननूक्तरीत्यैव विव्याधेत्यादिसिद्धेउभये
२९ षांग्रहणवैयर्थ्यमितिचेन्न॥जिज्यौविव्याधेत्यादौबाधकसंप्रसारणप्रवृत्त्युत्तरंबाध्यहलादिःशेषाप्रवृत्त्यापूर्वहलादिःशेषाप
स्यातद्वारणार्थत्वात्॥नन्वेवमववेष्टतइत्यादौहलादिशेषात्पूर्वंटस्यात्वापत्तिरितिचेन्न॥अत्वेहस्वात्परत्वाद्धलादिशेषवार्णा
दांगमित्यस्यानित्यत्वात्॥ह्रस्वात्पूर्वमयादेशेपुनर्हलादिशेषेरूपसिद्धिः॥यद्वात्वेलोपेह्रस्वेयणि पुनर्हलादिशेषेरूपसि
द्धिः॥नन्वेवंयुणेमङ्लुकोरित्यत्रेकुपरिभाषाप्रवृत्त्याडोढौक्यते इत्यादौपूर्वह्रस्वेयुणस्यचरितार्थत्वेनलोलूयतेनोनूयतइ
त्यादौपरत्वाद्गुणह्रस्वापत्तिः॥ममतूत्सर्गस्यप्रथमंप्रवृत्तिकल्पनस्यैवपरिभाषार्थत्वेनादोषादितिचेन्न॥धर्मिग्राहकमाने
नसाधकप्रवृत्तिवैफल्याअसंपादिकायाएववाधकप्रवृत्त्युत्तरंबाध्यप्रवृत्तेरनयाकल्पनेनादोषात्॥प्रकृतेचगुणोत्तरंह्रस्वे
तत्प्रवृत्तिवैफल्यंस्पष्टमेवेति॥तत्भियाबाध्यह्रस्वस्यैवपूर्वप्रवृत्तिः॥वाध्यस्यबाधकात्पूर्वप्रवृत्तौतुअवीभवदित्यादौसर्व
बाध्यस्यप्रथमंप्रवृत्तौपश्चाद्येननाप्राप्तिन्यायेनोःपुयण्ड्यितत्वाध्यस्यदीर्घोलघोरित्यस्यप्रवृत्तौपश्चात्ओःपुयणितिइ ए०
त्वेलक्ष्येलक्षणस्येतिन्यायेनदीर्घाप्रवृत्तौतदसिद्धिः॥पिपविषतइत्यादौदीर्घाप्राप्तौधित्यस्यचरितार्थेपिवर्गप्रत्याहारग्रहो २९
निरवकाशएवनचविभावयिषतीत्यत्रेत्वस्यचरितार्थ्यमितिवाच्यं॥एवमपिविव्यथइत्यत्रउक्तरीत्यादोषापत्तेर्ममतुह्रस्वा
त्पूर्वप्राप्तौपुयणित्यस्यालीलवदित्यादौदीर्घाप्राप्त्याचरितार्थस्यारीरवदित्यादौपरत्वाद्दीर्घेणवाधितस्यदीर्घोत्तरंप्रवृत्तेर्बाध

कदीर्घप्रवृत्तिवैफल्यसंपादकत्वेनपूर्वमेवेत्वेपश्चाद्दीर्घेरूपसिद्धिः॥यत्रवाध्यस्यबाधकात्पूर्वंपश्चाच्चसफलबाधकप्रवृत्ति
विघटिकाप्रवृत्तिस्तत्रसर्वथाबाध्यस्याप्रवृत्तिरेव॥यथाऽतएकेतिसूत्रेभाष्येपापच्यतेइत्यादि दीर्घेणवाधितयोरत्वाभ्यासलो
पयोःपश्चादप्रवृत्तिरित्युक्तं॥तथाचायंनिष्कर्षः॥यत्रबाधकप्रवृत्त्युत्तरंसर्वथावाध्याप्रवृत्तिसंभवः॥तत्रवाध्यंप्रथमंप्रवर्तता
पश्चाद्बाधकं॥यत्रापिसफलबाधकप्रवृत्तिविघटिकापश्चात्बाध्यस्यप्रवृत्तिः॥तत्रापिपूर्वंबाध्यंप्रवर्तते॥यत्रतुपूर्वंपश्चाच्च
बाध्यस्यप्रवृत्तिःसफलबाधकप्रवृत्तिविघटिकातत्रनैववाध्यंप्रवर्तते॥इतरत्रतुवाधकस्यैवपूर्वंप्रवृत्तिः॥पश्चाद्बाध्यस्ये
ति॥केचित्तुसर्वत्रबाध्यप्रवृत्त्युत्तरंबाधकप्रवृत्तिरेतत्परिभाषार्थः॥उभयेषांग्रहणेनचसामान्यतएवलोपात्संप्रसारणस्य
वलीयस्त्वमिति विव्यधइत्यादौनदोषः॥पिपविषतेइत्यादौविभावयिषतीत्यादौचचारितार्थेनदीर्घस्येत्वबाधकत्वेदीर्घसि
द्धिः॥एवंहिअववेष्टदित्यपिसिद्धं॥अददरदित्यादौचेत्वदीर्घयोरत्वेरूपसिद्धिरित्याहुः॥तन्नेति इदमयुक्तंयत्रवाध्यप्रवृ
त्त्युत्तरंबाधकप्रवृत्तिस्तत्रैवेषेतिकैयटाशयस्यसुवचत्वात्॥नचदीर्घेकृतेतत्परकरणात्तुकोप्राप्तौधर्मिग्राहकमानविरोधः
तथासतितुग्विधानवैयर्थ्यापत्त्यातत्रसतपरत्वस्यवाभाम्यतइत्यादौभूतपूर्वदीर्घएवतुकूव्यावृत्त्यर्थत्वात्॥रुग्मिकोर्दीर्घव्या
वृत्त्याकितइत्यस्यचारितार्थ्याच्च॥अजंताभ्यासदीर्घइतिवदत्तस्तवाप्येषैवगतिः॥पूर्वंदीर्घेतुग्विधिवैयर्थ्यापत्तेः॥कृतेतु
वयनजंतत्वाद्दीर्घाप्राप्तेरकितग्रहणस्यनुकिदीर्घव्यावृत्त्यर्थत्वासंभवात्॥लोपस्याभ्यासैकदेशविकारत्वाभावान्नदोषः॥धर्मि

ग्राहकमानेनैकदेशविकारएवतत्प्रवृत्तेः॥अभ्यासलोपस्यतथात्वेपित्वस्याभ्यासविकारत्वाभावात्॥तस्यदीर्घेणबाधितस्

न्नियोगविशिष्टाभ्यासलोपस्यापि अप्रवृत्तिरित्यपि भाष्याशयउक्तेस्स्य॥ सर्वेथेदंभाष्यमेकदेश्युक्तिरितिनव्योक्तं नादर्तव्यमिति॰
दिक्‌ एकाज्प्य इति॥ अनेकाचूके॰सूयक इत्यादौतुण्वुलिलितीतिप्रत्ययात्पूर्वमुदात्तंवुनिनित्वादाद्युदात्तस्सितिस्वरे विशेष
इतिभावः॥युजन्निषेधेनेति॥अन्यथान मिकंपीतिरेणैवयुजबाधसिद्धेस्तद्वैय्यर्थ्यं ७१ हसितमिति नपुंसकेभावेक्तःल्युट्‌चेति
क्तल्युटौघञोपवादोनपुंसकइतिविशेषोक्तेः॥लिङ्‌लोटाविति॥इच्छार्थेषुलिङ्‌लोटावित्यस्यसमानकर्तृकेषुतुमुन्‌ इत्यस्याप
वादः॥अत्रलिङ्वेतिलिङ्‌भवत्येव॥लिङ्‌चेतिनियमात्लोडपिवारयितुंशक्यः॥ननुतुमुन्भावेकर्तृ कर्मणोर्लिङ्‌लोटाविति
कथंबाध्यबाधकभावः॥नैवम्॥भावेपिलिङ्‌लोटोर्विधानात्॥कृत्यत्जग्रहणमिति॥ननुकथमेतत्॥अर्हेर्थेविधानार्थंतयोरु
पादानमावश्यकंचात्इतिचेन्न॥कर्तरिकृदित्यादीनांकर्त्राद्यर्थासत्वेएवकृत्‌ नतत्सत्वेइत्यत्रैवतात्पर्येणार्हार्थस्याधिक्येपिक
र्तृरूपार्थस्यतत्रसत्वात्ततत्सिद्धेः॥ध्वनितंचेदंवासरूपोस्त्रियांइत्यत्रभाष्यकैय्यटयोः॥श्वःपक्तेति॥ननुअनद्यतनेइतिसूत्रेभा
ष्येअनद्यतनइतियोगंविभज्यसदित्यनुवृत्त्यानद्यतनेलटःसद्विधानेनानद्यतनेभविष्यतिलृटमनुमायश्वःसोमेनयक्ष्यमाणः॥
अनद्यतनेभविष्यतिइत्यादयः प्रयोगाःसाधिताः॥एवमेवभविष्यत्युपसंख्यातानांगम्यादीनांश्वोग्रामंगमीत्यादावपिसाधुता ए॰
भविष्यतिगम्यादयइत्यत्रभाष्यवार्तिककृतरभ्यामुक्तंतथाचात्रलडि श्वएवेतिचेन्न॥योगविभागसिद्धस्यासार्वत्रिकत्वात्॥प्रमि ३०
तेष्ववतेनलृडनुमानात्॥अतएवतत्रभाष्यकृताश्वोग्नीनाधास्यमानेनेत्यादयः प्रयोगाव्यसयेनसाधिताइतिदिक्‌ ॥ ७३ ॥
नस्यादिति॥समासाक्षिप्तोत्तरपदेनविशेषणादितिभावः॥ननुकुमारशब्दस्येति॥पुंसिस्त्रियाःस्त्रियाःपुंसोवाआरोपेणतयोःसा

मानाधिकरण्यमनभिधानादितिपुवाखलतीतिसूत्रेशब्दरत्नेस्पष्टं॥नन्वेवमिति॥ननुसामान्यरूपेणविशेषरूपेणचेयुक्तत्वात्ब
हुव्रीहित्वस्यरूपातिदेशेनसुलभोयंधर्मइतिकथंशंकोस्थितिरितिचेन्न॥विशेषरूपेणेत्यस्यानुपूर्वीविशेषरूपेणेत्यर्थभ्रमेण
तामुस्याप्यप्रातिपदिकत्वव्याप्यार्थपरत्वेनसमाधानात्॥ विभक्ताविति विषयसप्तमीयं॥नगोपूर्वन्निति विहितविभक्तिस्वरे
पिप्रवर्तते॥नांतरीयकतयेति॥अंतरशब्दोगहादिषुपठ्यते॥अंतरेभवंअंतरीयंतत्रनञ्समासेकृतेपृषोदरादित्वात्भाष्य
कारवचनप्रामाण्यात्वानलोपाभावः॥तत्रस्वार्थेकन्‌ इतिभावे इतिसूत्रेकैयटः॥ननुव्याघ्रीकच्छपीति॥इदमुपलक्षणं
॥माषान्वपत्साभीक्ष्यइतिणिनौकृतेसुवंतेनसमासःस्यात्तदासमासांतईकारइतिणत्वंनस्यात्‌ माषवापिणइत्यादावेव
तुस्यात्‌ गर्गभगिनीत्यादौणत्ववारणायसमासरूपप्रातिपदिकांत्यनस्यैवणत्वविधानात्॥एवंसांकूटिनित्यत्राभिविधावि
ति इनुणिततोविभक्तिस्वप्राप्नोति अणिनुणइत्यण्‌चतत्रस्वार्थिकत्वेनांतरंगत्वादण्स्यात्॥ततश्चकूटिनित्यस्यैवांगत्वादादि
वृद्धिःस्यात्॥याकृसुबुत्पत्तेःसमासेंऽतरंगत्वात्‌ पूर्वसमासः॥अणप्रत्ययोहिप्रातिपदिकविशेषापेक्षत्वात्बहिरंगः॥तत्रहि
कूटिन्निन्त्यस्मात्समासप्रातिपदिका दण्प्रत्ययेसतीष्टंभवति॥अतएवेति॥कारकांशेबहुलग्रहणात्सिद्धत्वंकिंतुएकदे
शानुमत्यैवसिद्धत्वादित्यर्थः॥तदुभयप्रसाख्यानमिति॥परेतुअत्रकारकग्रहणंकर्तृकरणइत्येतत्सूत्रविहितसमासमात्र
विषयकं॥कारकांशेबहुलग्रहणमूलकत्वादस्यास्तदंशेवाचनिकत्वेचानयैवकाष्टैःपचतितरामित्यस्यव्याहृतौक त्वेकरणइ
त्यत्रकृद्ग्रहणस्यचवैय्यर्थ्यं॥ग्रामशब्दस्यगमित्रशब्देनसमासेस्त्रियांग्रामगमिनीत्यत्रणत्वापत्तेश्च॥अतएवसंबंधसामान्य

त्रि० षष्ठ्यंतस्य देवदत्तस्येत्यस्य स्त्रीलिंगमाषवापिन् शब्देन समासे देवदत्तमाषवापिनीत्यत्र प्रातिपदिकांतेति णत्वं न ॥ त्वट्ठी त्यातु कत्वग्र
गा० हणपरिभाषया वापिन् शब्दस्य कृदंतत्वात् ङीबुत्पत्तेः पूर्वं षष्ठीति समासे समासरूपप्रातिपदिकांतत्वान्नस्य णत्वापत्तिः ॥ उपपदम
३१ तिङिति सूत्रस्थं भाष्यं तु तत्रैव प्रतिकूलं ॥ द्वयोः समकालिकत्वमभिप्रेत्य वार्तिककृता षष्ठीसमासात् उपपदसमासो विप्रतिषेधे
नेति वार्तिकेन विप्रतिषेध उपन्यस्तः ॥ तदुत्तरं च न वा षष्ठीसमासाभावादुपपदसमास इति वार्तिकेन च दर्शितः ॥ इदं च खंडनवा
र्तिकं भाष्यकृता हेत्वाख्यातं ॥ तत्र चाद्यं व्याख्यानं न वार्थो विप्रतिषेधेन किं कारणं षष्ठीसमासाभावादुपपदसमासो भविष्य
ति ॥ गतिकारकोपपदानामिति सुबुत्पत्तेः ॥ प्राक् समासवचनादिति ॥ अंतरंगबहिरंगयोर्विप्रतिषेधायोग इति तद्भावं कैय्यट
आह ॥ द्वितीयव्याख्यानं ॥ अथवा विभाषा षष्ठीसमासः ॥ तदोपपदसमासो भविष्यति प्रयोजनाभावाद्विप्रतिषेधो न पठित
व्य इति तदाशयं कैयट आह ॥ तथा च न वेत्यादि खंडनवार्तिकस्यैवायुक्तत्वात् फलाभावाच्च विप्रतिषेधो न पठितव्य इत्यर्थ
इयमुक्तं भवति नत्वत्रांतरंगबहिरंगयोर्विप्रतिषेधायोगस्य प्रथममुक्तस्य प्रत्याख्यानं गंधोपि प्रतीयत इत्याहुः ॥ विशेष्यान्व
यित्वमिति पाठः ॥ प्राप इति ॥ सुकपालो घटश्चित्ररूपवान् लंबकर्णो हृहत्कुक्षिरित्यादिव्याहृत्तये इदं तत्र हीति ॥ हे कुलिज्जिक रा०
इति दीक्षितोक्तं तु अयुक्तमेवेति भावः ॥ परमहृषदिति पाठः ॥ सुहृषदिति पाठस्त्वयुक्तः तत्राव्ययपूर्वपदप्रकृतिस्वरस्यैवेष्टत्वेन ३१
समासांतोदात्तत्वस्य दुर्लभत्वात् ॥ चङ्ग्यपि इति ॥ ननु ऋदृशिभ्यां चङ् दुर्लभ इति चेन्न ॥ ऋदृशोङ्तोऽङ्गी स्तनुवर्तमाने श्वयते
र इति चङ्ग्यपि स्यात् ॥ न्यायमूलेति ॥ ङितिह्रस्वश्चेत्यत्र वाचि ह्रस्वश्चेत्येव सिद्धे वामीति व्यर्थं सदस्यां ज्ञापकं इति केचित् ॥ ननु मति

श्रीमाचेति विग्रहे इदं हे घीति पूर्वनिपातनापत्तिः ॥ नलोपः सुविति सूत्रस्थभाष्यरीत्या पूर्वप्रयोगे पस्य घित्वं भावितस्य पूर्वनिपात
इत्यर्थे नात्र पूर्वप्रयोगे नदीत्वेन घित्वाभावात् ॥ अंगाधिकाराभावेन प्रत्ययस्य निमित्तत्वालाभात् ॥ एवमर्थस्य फलं द्युलिहावि
ति यथा न्यासे तु वामीत्येतत् साहचर्येण ङित्प्रत्ययस्यैव ग्रहणमिति ॥ न चित्र ङा दौ मत्यादीनां नदीत्वमिति चेत्सत्यम् ॥ एवमपि
वामि ह्रस्व इति न्यासेन सिद्धे वामीति सूत्रस्योक्तपरिभाषाज्ञापकत्वात् ॥ न चैवं ज्ञापिते पि नस्वस्मिं श्चारिताथ्यं ङिद्वचने
धामि अट नदीत्वोपजीव्यविघातेन सूत्रारंभसामर्थ्येनास्मिन्तदनाश्रयणमिति वाच्यम् ॥ अस्यापि यदागमन्यायेन सन्निपा
तविघाताभावसंपादनात् ॥ स्फुटीभविष्यतिचेदमुपरिष्टात् ॥ किंच स्वरतीति सूत्रस्थभाष्यपर्यालोचनया नद्युता द्विहितस्ये
त्यर्थे न यणुत्तरमाट्प्रवृत्या यणैव नदीत्वविनाशेनाटिनैतत्परिभाषाप्रवृत्तिः ॥ तस्माद्वामीत्यस्य ज्ञापकत्वं सुस्थिरं ॥ कृतितु
कग्रहणादिति ॥ परं परस्या बहिरंगत्वस्यानाश्रयणाच्चिंत्यमेतत् ॥ यथा कथंचिदिति ॥ नाजानंतर्यपरिभाषायैतदप्रवृत्तेरेवमु
क्तिः यद्वा पूर्वं किंचेत्यादिना तु विधौ बहिरंगपरिभाषाया अप्रवृत्त्युक्तेरेवमुक्तं ॥ केचिदिति ॥ न्यायमूलेत्यारभ्यैतदंतं केषां
चित्ग्रंथो बोध्यः ॥ अजंत नपुंसकशेखरेत् ॥ परे तु इकोचिजंतस्य त्रिभाष्ये आधयेइत्यादौ अव्ययसंज्ञावारणाया निकारोका
रप्रकृतिरिति प्रवृत्तं वार्तिकं सन्निपातपरिभाषया प्रत्याख्यायकः पुनरत्र विशेषः ॥ एषा परिभाषा क्रियेत अनन्यप्रकृतिर्वा
च्येतेत्य विशेषमाशंक्यावश्यमेषा परिभाषा क्रीयेत बहून्येतस्याः परिभाषायाः प्रयोजनानीत्युक्तं ॥ न्यायसिद्धत्वेऽवश्यं
कर्तव्येत्युक्तिश्चासंगता ॥ किंच न्यायसिद्धत्वे विशेषणविशेष्यभावे प्येतत्प्रवृत्त्यापत्तेोन प्रत्ययः ॥ पूर्वपरसन्निपातनिमि

त्रि० त्तकइतिभाष्यासंगतिः॥ अस्यैकदेशयुक्तित्वकल्पनंतुविरोधिभाष्यांतरादर्शनात्बाधकाभावाच्चायुक्तं॥ नचवर्णाश्रयइतिवार्ति
गा० कंप्रत्ययःसाक्षादेवनिमित्तंनेतिव्याख्यायनप्रत्ययेत्यादिनोक्तव्याख्यांदूषयित्वांगसंज्ञाद्वारेणप्रत्ययोननिमित्तंस्यादित्यभिप्रा
३२ येणांगसंज्ञातद्धिनिमित्तंस्यादितिप्रकारांतरेणभाष्यकृतातत्व्याख्यातं॥ तत्रशैवोगार्ग्योवैनतेयइत्यादावपित्स्यालोप
निमित्तत्वानापत्त्यावर्णाश्रयइत्यस्यवैयर्थ्यंबाधकमितिवाच्यम्॥ तद्वैयर्थ्येनाग्रिमस्यांगसंज्ञेत्यादेस्तथात्वेपिनप्रत्ययइ
त्यस्यैकदेशयुक्तित्वेबीजाभावात्॥ वस्तुतोंगसंज्ञेत्यपिनैकदेशयुक्तिः॥ अंगसंज्ञाविधौयस्मादित्युपात्तंतच्चप्रत्ययविधौत
दंतविधिर्येनरूपेणउपात्तस्तेनरूपेणपरामर्शकं॥ अतएवभुनक्तिइत्यादौनदीर्घः॥ तथाचदाक्षिरित्यादौअदंतप्रकृतेः
प्रत्ययस्यचानंतर्यंअंगसंज्ञानिमित्तंतच्चलोपेनश्यत्ति॥ विशिष्टप्रकृतेरानंतर्यनाशात्॥ शैवइत्यादौविशिष्टप्रकृतेरानंतर्यं
नांगसंज्ञानिमित्तं॥ नचशैवइत्यत्रापिप्रातिपदिकप्रत्यययोरानंतर्यंअंगसंज्ञानिमित्तंतच्चलोपेनश्यत्येवप्रातिपदिकत्व
नाशादितिवाच्यं॥ लौकिकैकदेशविकृतन्यायस्याशास्त्रीयेपिप्रवृत्त्यातेनप्रातिपदिकत्वस्यसुलभत्वात्॥ यदागमन्यायस्तु
शास्त्रीयेकार्यएवेतितुक्युकोरेतत्परिभाषासंचारोभाष्यकृदुक्तोनविरुद्धः॥ यद्वायदागमन्यायोनेतत्परिभाषावि ग०
घटकः॥ कृन्मेजंतसूत्रस्यभाष्यात्॥ नचैवंदाक्षिरित्यत्रवृद्धेर्लोपस्यबलवत्त्वात्पूर्वंलोपेदंतत्वाभावेनांगत्वाभावात्वृ ३२
द्ध्यनापत्तिरितिवाच्यं॥ षट्त्वस्येवांगसंज्ञायाःअल्वृत्तित्वाभावेनस्थानिवत्त्वेनतत्सौलभ्यात्॥ इड्विधौवलादस्येवांगसं
ज्ञायांयच्छब्दस्यालमात्रोपस्थापकत्वाभावाच्च॥ ग्रामणिकुलमित्यादौश्वर्थाश्रयत्वेनह्रस्वस्यबहिरंगत्वेनासिद्धत्वान्नतुक्

तिसृणामित्यादौतुत्रयादेशस्यापिविभक्तिविशेषापेक्षत्वेनबहिरंगत्वसाम्यात्तिस्रादेशेनविप्रतिषेधोपपत्तिः॥ विशेषापेक्षस्य।
बहिरंगत्वंतुपुंयोगादितिसूत्रेसांकूटिनमित्युदाहरणेभाष्यकैयटयोःस्पष्टम्॥ पत्वतुकोरित्यत्रयथानतुकवैयर्थ्यंतथोक्तंप्राक्॥ ए
कृतितुक्ग्रहणंतुभाष्यकृताप्रत्याख्यातमेव॥ तुक्विधौपरिभाषायाःअप्रवृत्तिज्ञापनेफलाभावाच्च॥ किंचविशेषणविशेष्यसं
निपातस्यापिग्रहणेग्रामणिछत्रमित्यत्रापितुक्नस्यात्॥ ह्रस्वतुकोस्त्वत्रसाम्यं॥ तुकःपदद्वयसंबंधिवर्णद्वयनिमित्तत्वात्
ततश्चनात्रांतरंगपरिभाषोपतिष्ठते॥ वस्तुतोयदागमन्यायेनापिसंन्निपातविघाताभावसंपादनं॥ ज्ञापकंचात्रनेतिस्त्रितिनिषे
धः॥ अन्यथापरत्वात्तिस्रादेशेसन्निपातपरिभाषयानुटोऽप्राप्तौतद्वैयर्थ्यं॥ तदेतदभिप्रेत्यकृन्मेजंतसूत्रेप्रतिविधेयंदोषइ
तिसिद्धांतभाष्यव्याख्यावसरेज्ञापयतीत्साकारांतभक्तः पुक्नव्यवधायकइत्युक्तंकैयटेननलोपःसुपितिसूत्रस्थंवृत्रहभ्या
मित्यादौसन्निपातपरिभाषयातुग्वारणापरंभाष्यंत्वेकदेशयुक्तिः॥ नपुंसकेवृत्रहेत्यत्रानयातुग्वारणा संभवेनकृतितुक्।
ग्रहणस्यावश्यकत्वात्॥ एतेनकृतितुग्ग्रहणात्तुग्विधौबहिरंगपरिभाषानेत्यपिपरास्तं वृत्रहपुत्रइत्याद्यर्थंतदावश्यकत्वात्
॥तेनप्रियतिसृणितानिकानिइत्यादौनुम् तेषामित्यत्रसुट् पचमानइत्यत्रसुक्चसिद्धः॥ मुक्तुअधिजिगांसमानइत्यत्र श
पंबाधित्वाचरितार्थः॥ एवंचग्रामणीत्यत्रसंन्निपातपरिभाषायाअप्रवृत्तौअंतरंगपरिभाषैवतत्रापिशरणमित्याहुः॥ स्वातिरि
क्तस्येति॥ शतानीत्यादौस्वस्य स्वनिमित्तविघातकत्वेपिसामर्थ्यात्प्रवृत्तिरितिभावः॥ ननुशतानीत्यत्रस्वनिमित्तभूतःसन्निपा
तोऽजंतस्यसर्वनामस्थानेनानंतर्यंसचस्वेनैवापहतःतस्यांगसर्वनामस्थानयोःसन्निपातोलुकाविनाश्यः॥ सचनतुमोनिमित्तंइ

स्मिच उदस्यादपि बदित्यत्राद्यं नौटकितादिनिशास्त्र सहकारः सुपद इत्यत्र येन विधिरिति सहकारस्य। वि
सर्जनीयस्य स इत्यत्र तु तदंतस्य येन विधिरित्येन तस्य हकारसत्त्वेपि विंदुद्वयस्य तदभावात्। यद्यपि स्वं रूपमि
ति संकेतग्राहकं सत्वेनैतच्छास्त्रीयेत्यनुपपन्नं तथापि भाष्ये तस्य प्रत्याख्यानात्। सत्वेपि तदतिरिक्त विशे।
षणोऽशेषाभावाच्च। ईदृशनिर्दिश्यमानत्वं ग्रंथकृतोप्यभिमतमेव। अन्यथाव्यक्तिपक्षे शंकाया जातिपक्षे
ण समाधानासंगतिः। तत्र जातेर्निर्दिश्यमानत्वे तुल्ययुक्त्याप्यणुदित्सूत्र गृहीताष्टादशव्यक्तीनां निर्दिश्यमा
नत्वसंभवात्। ज्ञापकाश्रयणासंगतिश्च अंतरा च रीङ्· रिङोर्ङित्वं सख्यर्थमिति वक्ष्यमाणग्रंथसंगतिः। अन्य
था तदोः सः सावित्यत्रानुवृत्तत्यदादीनामित्यस्यैव तद्विधा वनुवृत्तेनागस्येत्यस्य निर्दिश्यमानत्वसंभवादंत्यादेश
त्वायतनस्यावश्यकत्वेन तदसंगतिः। ममतु अंगस्येत्यस्यैकतच्छास्त्रीयसंकेतितत्वेन तदंतस्य च तथात्वेन त
त्संगतिस्स्यैष्टैव। नन्वेवमपि स्वपूर्वापरविरोधः। इयङुवङोर्ङित्वबलात्त्यादीनामपि निर्दिष्टत्वादंत्यादेशत्वा
येत्यनेन धातोरप्येतच्छास्त्रसंकेतितत्वादिति चेत्। ग्रंथस्यान्याभिप्रेतकत्वात्। तथाहि। धातोरादिः धात्वादिः
। धातुरादिर्ययोरित्यतद्गुणसंविज्ञानो बहुव्रीहिः धात्वादिश्च धात्वादी च धात्वादयः तेषामिति षष्ठीतत्पु



रुषवहुव्रीहिगर्भैकशेषेणाश्रुभ्रूस्त्रीणां निर्दिश्यमानत्वादंत्यादेशत्वायेत्याशयात्। इदंतु धात्वादीनामिति।
वदेता सूचितमिति बोध्यं। अत एवानेसुगिति सुग्विधानस्य यदागमेति न्यायानित्यत्वज्ञापकत्वं संगच्छते।
अन्यथा यदागमेति लब्धस्य उक्तरूपनिर्दिश्यमानत्वाभावेन तदसंगतिः। अत एव च येन विधिरित्यत्र भा
ष्ये प्रत्ययग्रहणे चापंचम्या इत्यस्य हृषन्तीर्णा इत्युदाहरणं संगच्छते इति दिक्। अनया परिभाषयेति। येन
विधिरित्यस्यैव यदागमेत्यस्यापि संज्ञात्वबोधकत्वेनोक्तरूपनिर्दिश्यमानत्वेन तयोर्नास्तीति भावः। लोकेना
प्यंगाधिक्ये संज्ञासंज्ञिभावस्यैवबोधनात्। नचैतच्छास्त्रीयसंकेताभावात्तैस्य तत्वं सुलभमिति वाच्यं। आद्यं
तौ टकितावित्यादिना संज्ञासंज्ञिभावस्यैव लाभात्। अत एव ऋकारस्य गुणाद्वृद्धी अरारावेवेति संगच्छते। अ
तिदेशस्य तु तथात्वाभावेन तद्बोधितस्य निर्दिश्यमानत्वमेव। अत एवोक्तनिसृणामिति भाष्यसंगतिः लिंग
विशिष्टपरिभाषायामपि अतिदेशत्वेन तद्बोधितस्यापि निर्दिश्यमानत्वमेव। अत एव सखीसुपथ्यीत्यादि।
विभक्तौ लिंगविशिष्टाग्रहणमिति परिभाषोदाहरणं भाष्ये संगच्छते। अत एव महती प्रियाय स्येति बहुव्री
हौ लिंगविशिष्टपरिभाषया न्महत इत्यात्वमाशंक्यानित्यत्वेन समाहितं भाष्ये। नन्वेवं तदोः सः सावित्यत्र

भाष्यशेखराद्यसंगतिः। तत्रहिलोरितिनोक्तमनेयेत्यादौनस्याप्यपत्तेरित्युक्तमतिस्य इत्यादौतद्वारणायपरिभा
षाप्रवृत्तेरावश्यकत्वयायदागमेतिन्यायबोधितस्यानित्वस्याप्यनयावाधादितिचेन्न। विरोधाभावात्। निर्दिश्य
मानत्यदाद्यवयवत्वस्यनकारेसत्वेनदोषध्रौव्यात्। उदस्यादित्यत्रतुनि दिश्यमानस्योदःपरत्वाभावेनततः।
परस्यनिर्दिश्यमानत्वाभावेनचविरोधःस्पष्टएवेतिबोध्यं। एवंचतन्मध्यपतितन्यायबोधितस्यानित्वस्यापिने
यंवाधिकानस्यस्थानिवद्भावतुल्यत्वात्। नचयदागमेत्यनेनास्य भेदाभावेनस्थानिबुध्याकार्यजननादित्यस्यो।
भयत्राविशिष्टत्वेनकथमेतदितिवाच्यं। कादेशःखल्ववश्यंवाच्यःसाकच्कार्थः। अश्ववचनंसाकच्कार्थमित्या
दिभाष्यादस्यन्यायस्यातिदेशत्वलाभाद्यदागमेतितूदस्यादितिनिर्दिश्यमानस्येत्यस्योदाहरणदानात्संज्ञाबोध
कइतिलाभे नचतयोर्भेदस्यवालैरपिसुज्ञेयत्वात्। अतएवजरायाइतिसूत्रशेखरःसंगच्छते। नचोक्तभाष्याद
व्ययसर्वनाम्नामित्यकच्विषयेनिर्दिश्यमानस्येत्यस्यप्रवृत्तिरेवास्तु। अतएवकिमःकइतिसूत्रशेखरोपपा।
दितभिन्धकीत्यत्रभाष्यविरोधोनेतिवाच्यं। न्यायसिद्धोक्तभाष्याभ्यामेतद्भाष्यस्यैकदेश्युक्तित्वात्। अकचिक्त।
तेधित्वंनप्राप्नोतीतिभाष्यस्यतन्मध्येतिन्यायेनाकच्विशिष्टस्याधिलेऽकचःश्रवणंनप्राप्नोतीत्याशयमज्ञान।



नापरत्वाद्धित्वमितिसमाधानमेकदेशिनाकृतं। अतएवभाष्येऽयवाहकारस्यैतदशक्तिजेनेकारेणनिर्देशइ।
तिउक्ताशयेनसमाधानंकृतं। तत्रत्यशेखरस्तुहुझल्भ्यइतिसूत्रस्यकैयटानुरोधेनेतिकेचित्। एतेनाकच्विष
येनायंन्यायइतिप्रतीकमुपादायकिमःकादेशेकर्तव्येइतिशेषइतिवदंतःपरास्ताः। उक्तभाष्यद्वयविरोधा
त्मपर्यंतस्यकिमुत्सुवकाम्यामितिप्रक्रियाग्रंथविरोधाच्च। एतेनाकच्विषयेनायंन्यायःस्थानिवद्भावेनैवतन्मध्य
पतितन्यायेनापितद्बुध्येवकार्यजननादितिवक्ष्यमाणग्रंथोपिइहैवव्याख्यातइत्यलं। विरोधाभावादिति।
राज्ञःकचेत्यादौनिर्दिश्यमानराजन्शब्दांतस्यकादेशोभवतीत्यादिनासमावेशसंभवादितिभावः। यद्यपिसत्य
पिसंभवेबाधनंभवतीतिभाष्यनयेविरोधेपिबाधसंभवः। तथाप्यबाधेनैवोपपत्तौबाधोनन्याय्यइतिभावः। य
त्वादेःपरस्येति। सुपदइतिभाष्योदाहरणादनेकालितिविषयेऽस्याश्चारितार्थ्येनपरत्वादस्याबाधःस्यादि।
तिभावः। नापीति। निर्दिश्यमानेत्यस्यषष्ठीस्थानेइत्येतदर्थभूतत्वेनवाक्यार्थबोधात्पूर्वंप्रवृत्त्यांतरंगत्वंतस्यरात
योस्तुस्थानषष्ठीनिर्णयोत्तरंप्रवृत्त्यावहिरंगत्वमितिभावः। कियदइति। अत्रारुचिबीजंतु अनयोर्निर्विषयत्वा।
भावः। हरीणामित्यादौदीर्घस्यांत्यादेशत्वाय अलोंत्यस्येतिचरितार्थं। नामीत्यादौह्रस्वस्यगुणइत्यपिबोध्यंअच।

शांकरी· इत्यस्यसंकेतितत्वान्निर्दिश्यमानत्वाभावादंतरंगप्रवृत्त्युत्तरंबहिरंगप्रवृत्तौबाधकाभावाच्च।अकच्चिषयेइति।
१२ अत्रयद्वक्तव्यंतदुक्तंप्राक्।तमबग्रहणमेवेति।नन्वनेकविधांतर्याभावेपिस्थानकृतांतर्यस्यसत्वेनतत्रैवानिश।
यत्वलाभार्थंतमबग्रहणंतत्वंचान्यूनानतिरिक्तस्थानित्वंतेनहरीणामित्यादौएदैतोनलाकृतिरित्यादौवकारो
यणनेतिचेन्न।तदभावेहिपूर्वसूत्रेस्थानेग्रहणानुवृत्त्याप्रसंगेसदृशोभवतीत्यर्थसंपन्नेस्थानेइत्युत्तरसूत्रसा
मर्थ्यादेवातिशयत्वलाभेतमबग्रहणस्योक्तार्थतात्पर्यकत्वसत्वात्।तेनह्यनेकविधांतर्यलाभेप्रसंगेस्थानेनैवां
तरोभवतिसतिसंभवइत्यर्थेज्ञातेतमबग्रहणस्यातिशयत्वलाभार्थत्वमित्यन्यदितिबोध्यं।समानवर्णपादादीनां
तइति।तेनचरणशब्दस्यपदादेशोनेतिभावः।यद्यपिचरणपदशब्दयोःपर्यायतयास्थान्यादेशत्वसत्वेपिन
दोषस्तथापिपदंघ्रिश्चरणोस्त्रियामितिकोशेनचरणशब्दस्यनपुंसकत्वलाभेनतन्नुस्थानेतत्समानार्थक।
पदादेशःशास्तिनुमिपदीत्यस्याप्यापत्तेः।ननुपद्दन्निति सूत्रस्यनस्थान्यादेशबोधकत्वंकिंतुव्यवस्थार्थत्वं।
किंचस्थानेंतरतमे॥इतिसप्तम्यंतपाठस्यभाष्येदूषितत्वेनविसदृशादेशनिवृत्तिमात्रार्थकत्वेपिनादृशस्था राम·
निनिवृत्त्यर्थकत्वाभावेनेदमुदाहरणमित्यस्वरसादाह।तृज्वत्क्रोष्टुरितिचेति।नन्वेवमपीति।अर्थवद्ग्रहण १२

परिभाषयासर्वथानर्थकस्यवारणेपीत्यर्थः॥आमहान्महान्भूतः महद्भूतश्च्व्यंतस्योर्यादिच्विडाचश्चेत्यनेनगतित्वेकुग
तिप्रादयइतिसमासः।गौणार्थबोधकत्वेनशब्दस्यापितत्वंबोध्यं।संज्ञादिरिति।अत्रकर्मण्यानच्चोपसर्गेइत्यङ्।आदि।
नान्अनुकरणपरिसंग्रहः।यद्वासंज्ञाआदिःप्रथमबोधकोयस्यससंज्ञीत्यर्थः।अत्रपक्षेपिअनुकरणसमुच्चायकोबोध्यः
महांतौबाहूयस्यसमहाबाहुरित्यत्रात्वायोपसर्जनत्वरूपगौणत्वस्याग्रहणमावश्यकं।अतएवसमानाधिकरणोत्तर
पदेआत्वविधानंसफलमुपसर्जनप्रतिषेधश्च।एवंचेदंप्रयोजनंनासाधारणंपदकार्यविषयत्वस्येतिहृदिनिधाया
ह।किंचेति।यत्तुपदोद्देश्यकंकार्यमेवतत्कार्यमितितन्न।आन्महतइत्यत्रोत्तरपदाधिकारेणतेनपूर्वपदाक्षेपेणयथा
कथंचित्तत्वसत्वेपिराजश्वशुराद्यदित्यादितद्धितविधौसुबंतात्तद्धितइत्यस्यसत्वेपिश्वमतेघंकालतनेष्वितिज्ञापकोदु
ह्यमानःप्रातिपदिकात्प्रत्ययःस्वपःपरस्तात्।एवंचगर्गादिभ्यइत्यादौनलक्षणेत्यर्थसत्वेनतद्धितानांपदोद्देश्यक।
त्वाभावेनम्याशुरित्यादौयदापत्तेः।गोमवदित्यादौप्रगृह्यत्वापत्तेश्च।नापिपदसंबंधित्वंतत्वंम्याशुरित्यादावत।
इत्वानापत्तेः।त्वद्वतीत्यत्रत्वाद्यादेशानापत्तेश्च।तस्मादस्तुनःपदव्यपदेशरहितानिमित्तत्वंतत्वंतद्धितविधौप्रातिप।
दिकाधिकारस्यसत्वेपिवस्तुतःपदव्यपदेशरहितनिमित्तकत्वसत्वात्।नचैवंप्रत्ययोत्तरपदयोश्चेत्यस्यापिपद।

कार्यत्वापत्तिः। तथा च त्वद्भवतीत्यत्र त्वाद्यादेशो न स्यादिति वाच्यं। उत्तरपदे पदव्यपदेशनिमित्तकत्वेपि च्विप्रत्य
यादौ वस्तुतः पदव्यपदेशरहितानिमित्तकत्वाभावात्। अत एव नत्रद्वयोपादानं। त्वद्भवतीत्यादौ च्विप्रत्यये
स्यादिष्विति पदत्वसत्वेपि सुवंतत्वाभावात्। सुप्तिङं तमिह पदत्वं विवक्षितं। तत्व पदस्याप्रयोगेणोत्यादिनाग्रं
थकृतैव ध्वनितं। यदि तु राजश्वशुर्यद्दित्यादौ उपजनिष्यमाणनिमित्तोप्यपवाद इति न्यायेन प्रकल्प्येति न्याये
न च भविषयत्वेन पदत्वं वाध इत्युच्यते तदा पदव्यपदेश इत्यत्र क्वासुवंतव्यपदेश इति पाठो वोध्यः। उपा
त्तमित्यादीति। एतेन विशेषसात्रयस्यापीदमेवं कृत्यमिति ध्वनितं। तथाहि। यदुपात्तमतद इति तत्तद्विशिष्टरूपं।
यद्विशिष्टरूपं प्रातिपदिकादि तत्तद्विशिष्यार्थोपस्थापकं यद्विशिष्टार्थोपस्थापकं स्वशुरद्धितित तदुपात्तमिति
ध्वनितं। नन्वेवमोत्सूत्रस्य भाष्यासंगतिः। तत्रह्यदो भवद्भोभवदित्यादौ प्रगृह्यत्वं गौणत्वेन परिहृतं। निपातपद
स्य प्रातिपदिकतुल्यत्वाद तत्राह। निपातपदं त्विति। निपतंत्यास्त्यानार्थप्रति विशेषणीभवंतीति व्युत्पत्त्या निपात।
पदस्य चादिषु योगरूढत्वमिति भावः। प्रातिपदिकपदं तु शुद्धरूढमिति वैषम्यं वोध्यं। वस्तुतस्त्वननुगतव्यक्ति। एम·
कानां संज्ञानां व्यक्तिरेव प्रवृत्तिनिमित्तं। डित्थादिषु व्यक्तिरेव तत्प्रत्ययार्थ इति न डित्थत्व डित्थयोर्भेदः। कादिसंज्ञा १३

नामपि व्यक्तिरेव तत् अनुगतानां नासौ तच्छब्द एव। एवं च निपातसंज्ञाया अनुगतव्यक्तित्वेन व्यक्तिरेव प्रवृत्तिनिमि
त्तमिति चादित्वेन चादीनामुपस्थितिः। प्रातिपदिकशब्दस्य तु शब्द एव प्रवृत्तेर्निमित्तमिति प्रातिपदिकपदत्वेनो
पस्थितिरिति युक्तमनयोर्वैषम्यं। ध्वनितं चेदं वैषम्यं कुत्वं कस्मान्न भवति भत्वादित्यादिना वृद्धिसूत्रे भाष्ये स्पष्टं चे
दं कत्वकसूत्रे विवरणे। संज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभिरित्युक्तिस्त्वननुगतविषयालक्षणया तथा व्याख्या
नपरैकैयदस्तु चिंत्य एवाकुत्वं नेत्यस्य ककारो नेत्यर्थस्तु प्रकृताभिप्रायेण। तत्रांतरतम्यात्तस्यैव प्राप्तेः। एवं च स
त्वं प्राप्तमित्यादावपि लक्षणां विनैव स्वरसतो निर्वाह इत्यलं। ननु नायं न्यायः पदकार्यविषयः किंतु विशिष्टरूपो
पादानविषयोऽन्यथा गां वाहीकमानयेत्यादौ त्वदुक्तहेतोः सत्वेनात्वादिप्रवृत्तावपि गां पाठयेत्यादौ पाठनक्रि
यान्वयायविभक्त्युत्पत्तेः प्रागेव गौणत्वप्रतीत्या उक्तहेतोस्तत्राभावेन चात्वादिनस्यान्ममतु विशिष्टरूपोपादा
नाभावान्न दोष इति कौस्तुभोक्तं युक्तमित्यौह। गां पाठयेत्यादावि विति। ननु वोद्धृणां पदे एव प्रतीतावपि वक्तृणां तु ततः पू
र्वमेव प्रतीतिसत्वेन विनिगमनाविरहात्तत्राह। भाष्यप्रयोगे त्वाद्यादेशकरणे नचेति। सांनेति दीर्घस्त्रादिशब्दार्थः॥
कचित्थैव[illegible] त्वाद्यनापत्तिरित्यर्थः। त्वद्भवती।

शांकरी. त्यत्रतुपदसंस्कारपक्षेपि दोषो बोध्यः। एतत्सर्वं वक्तुं तत्पूर्वमेव तथा बोध इत्यभिप्रेत्य चस्तुतः सत्त्वनेत्याह। किंचेति॥ क
१४ र्तृक्रियेचानिर्दिष्टावितिपाठः। पुमान्स्त्रियेत्येकशेषात्। अत एव भाष्येपि तथैव पाठः। गामेवेत्यस्य तत्पदवाच्यमेवेत्यर्थः
भाष्यस्यानुकरणमिदम् अन्यथा गोरेवेति वदेत्॥ एवंचाग्रे देवदत्तेवेति पाठः भाष्ये संबुद्ध्यंतस्य तस्य दर्शनात्। घुत
त्वं तु न वाक्यांतत्वाभावात्। भाष्येपि गामभ्याज देवदत्त शुक्लामिति पाठे न तस्य वाक्यांतत्वाभावाच्चेति बोध्यं। श्लोक
इति। अभिव्यक्तपदार्था येस्वतंत्रा लोकविश्रुतां शास्त्रार्थं स्ते कर्तव्यं शब्देषु न तदुक्तिश्चिरित्यर्थः। आरभंते तिवाचि
त्कोपपाठः आरभमाणेनेतिपाठः। तस्यात्मनेपदित्वात्। नन्वेवमोन्न्स्त्रस्य भाष्यासंगतिरेवोक्तरीत्या न्यायस्य पद
कार्यविषयत्वलाभे न तथैव वक्तव्ये ऽन्यथा समाधिकरणं तमनुचिप्रस्तुतविशिष्टरूपोपादानविषयत्वमितो लभ्यत इत्या
शास्त्रार्थाश्रय इत्यादि। एवं च न्यायस्य पदकार्यविषयत्वं स्पष्टमेवोक्तमिति भावः। त्वयापि मदुक्तरीत्यैव इदं भाष्य
व्याख्येयमित्याशयेनाह गोत इति। एवं च त्वदुक्त विशिष्टरूपोपादानसाधकमिदं नेति भावः। तस्मात्त्कं तव्यपदेशर
हितानिमित्तके कार्ये यत्र विशिष्याप्यार्थोपस्थापकमुपात्तं विशिष्टरूपं तत्रैवायं न्यायः सिद्ध इति बोध्यम्। नन्वेवं मगोमतीगोमतीस रान.
पन्ना गोमतीभूता इति प्रत्ययलोपसूत्रभाष्यप्रयोगे स्त्रियाः पुंवदित्यस्याप्राप्तिः। अमहती महती संपन्ना इत्यत्रे १४

वत्तत्र विशिष्टरूपोपादानाभावात्। एवंचास्य न्यायस्याप्रवृत्तिरिति चेन्न॥ गोमतीत्यस्य नदीत्यर्थेनाभाषितपुंस्कत्वेनादो
षात्। स्पष्टंचेदं प्रत्ययलोप इत्यत्र विवरणे। यद्यपि तत्र कैयटेन च्व्यंतेक्वचिद्विकृतेः कर्तृत्वं क्वचित्प्रकृतेरेवं च गोम
तीसंपन्ना इत्यत्र प्रकृतेः कर्तृत्वेन विकृतेः गोमतीत्यस्य भूतेत्यनेन वैयधिकरण्यान्न पुंवत्त्वं महद्भूत इत्यत्र तु वि
कृतेः कर्तृत्वेनास्ति सामानाधिकरण्यमिति समाहितं तथापि गोमतीत्यस्यारोपेण अगोमतीत्यर्थकत्वेन सा
मानाधिकरण्यस्य सत्वादिति विवरणे न दूषितत्वादितिदिक्। सुपयाः स्त्रीता इत्यादा विति। स्त्रुवीभ्यां तु दृचे
त्योणादिको सिः। आगमसमभिव्याहारे विशिष्टस्यैवार्थवत्वनियमेनासौ त्रानर्थकत्वमिति भावः। ननु नेदं यु
क्तं। अवयवानर्थकत्वेपि विशिष्टस्य तद्ग्रहणेन ग्रहणान्नानर्थकत्वं। न च निर्दिश्यमानस्यावयवषष्ठ्यामपि प्र
वृत्त्या निर्दिश्यमानासंतस्योपधाया दीर्घ इत्यर्थसत्त्वेन प्रकृते निर्दिश्यमानत्वस्य अनर्थकत्वेनेति वाच्यं। अपि
वदित्यादावनर्थकेपि वाद्यादेशकरणेन निर्दिश्यमानस्यार्थवतो ग्रहणे मानाभावात्। समन्ते उणादीनामव्यु
त्पन्नतया सुस्त्रोतसित्यव्युत्पन्नमेवेत्यभिप्रायान्न वक्तुं शक्यः। सुपय्या इत्यस्यार्थवत्तत्स्योदाहरणस्य स्कमेरुम्भंगा
रूढत्वा [illegible] मेवोदाहरणं द्रष्टव्यं। यद्यपि।

॥ ८ ॥ निसूत्रे शेखरे इति तत्त्वबोध्यम् अस्यानित्यत्वमूलकत्वं वदतस्तवविभाषेटइत्त ॥ ८ ॥

शेखरे · भाष्ये दण्डी वाग्मीत्येवोपात्तं तथापि तदुपलक्षणतयैव व्याख्येयं। अन्यथा तत्र सौचेतिदीर्घस्य सत्त्वेन नियमस्यानुपयु

१५ क्तत्वेन च तदसंगतिः स्पष्टैवेति दिक्। अगादिति परे इति। परे इत्यनेनारुचिः सूचिता। तद्बीजं तु विभाषेटइत्यत्रार्थव

त्त एव षीध्वमः संभवो नानर्थकस्येत्यगादित्यस्यानर्थकत्वरूपे तत्र हीट इति न षीध्वम् विशेषणमसंभवात्। इडोव य

वत्वेन विशिष्टे षीध्वत्वमुसत्त्वेपि तद्रहितत्वाभावेन तत्त्वस्य दुरुपपादत्वात्। किं तु धकारविशेषणं। येन नाव्यवधा

नन्यायेन षीशब्दव्यवधापि न भवति वचनसामर्थ्यात्। इणः परो य इट् ततः परस्य तत्संबंधिधकारस्य ढो भवती

ति तदर्थः। एवं च तत्राप्यर्थवत एव संभवे नांगग्रहणस्योक्तार्थबोधकत्वं युक्तमेव। परं त्वर्थवद्ग्रहण इत्यस्यैतेनानि

त्यत्वबोधनेपि अनित्यस्मिन्नित्यस्य तन्मूलकत्वं भाष्ये वचनरूपेणैवतस्य पाठात्। स्पष्टश्चायमर्थः। विभाषेटइ

त्यत्रानर्थकस्यैवतस्य संभवे नात्रापि तथा भ्रमः स्यादिति कर्तव्यं त्वया गादिति। मम तु नावश्यकं तदिति ग्रंथ

कृदाशयो बोध्य इत्यलं। तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबललभ्यमिति। अनेनोभयत्रेदमेव बीजमिति सूचितं। य

द्यपि अर्थाधिकारशब्दाधिकारावेव नयोर्बीजमिति केयटेनोक्तं तथापि पक्षानिरिति सूत्रे भाष्ये कथं पुनरेकयोगनि राम·

र्दिष्टयोरेकदेशोनुवर्तते एकदेशोनेत्युक्तं। एकसूत्रनिर्दिष्टानां पदानामप्युपदेशेऽजनुनासिक इत्यतोनुवृत्तिदर्श १५

नेनार्थवद्धातुरित्यतो धुर्विन्यदानुवृत्तिदर्शनेन च यथाश्रुतभाष्यप्रश्नानुपपत्त्या समासनिर्दिष्टानामित्येव तदर्थो

वाच्यः न तु परस्परान्वितानामिति। समासे हि वृत्तिस्वभावाद्राजपुरुष इत्येतद्घटकराजपुरुषपदयोरपि राजसंबं

धवत्पुरुष इत्यर्थे शक्तिरिति निर्विवादोत एवनाम्नैकदेशनामग्रहणमित्युद्घोषः। एवं च पाकमूले इत्येतद्घटकमू

लपदस्य पाकमूलार्थकस्यार्थरहितस्य कथमनुवृत्तिरर्थाधिकारादिति प्रश्नः। शब्दाधिकाराश्रयणेन समाधिः।

एकत्रार्थे एकोपस्थितिरूपे युज्यमानं संबद्धं यत्पदं तेन निर्दिष्टानां पदानां मध्ये एकदेशोर्थरहितोप्यनुवर्तते। अ

नुमीयते शब्दाधिकाराश्रयणादित्युत्तरार्थः समुदायाभिधायि द्वंद्वनिर्दिष्टयोरिति तु प्रकृताभिप्रायेण पूर्वपक्ष।

भाष्यव्याख्यानपरं बोध्यमिति लभ्यते। तथापि नेदं युक्तं। ओतोम्शसोरिति सूत्रे शचिनबसित्यत्रात्वव्यावृत्तये वा

सुप्यापिशलेरित्यतः सुपीत्यनुवर्त्यवानुवृत्तिमुक्तन्यायेनाशंक्यालुगुत्तरपदे इति दृष्टांतेन निवारणपरभाष्यासंग

तेर्नहि दृष्टांते दार्ष्टान्तिके वा समासनिर्देशोस्तीति येन तदुक्तिसामंजस्यं भवेत्। तस्मान्न्यायद्वयस्य मदुक्तमेवम

वृत्तौ निवृत्तौ च बीजं। एकसंबंधान्वितानां परस्परमिलितानामित्येवार्थः। अत एवालुगुत्तरपदे इत्यस्यावतरणे लेखः।

अत एव पूर्वत्र लोकदृष्टांतो लेखश्च संगच्छते इति कृतवृद्धय एव विदां कुर्वंतु ज्यादादीयसइति। नत्तु नेदं ज्ञा

पकं ज्ञापितेपि चारितार्थ्याभावात्॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ईकारस्याकारे वहोर्लोप इत्यतो
लोप इत्यनुवर्त्यापीकारस्य निवृत्ताववकारविधानसामर्थ्यादेव पररूपं वाधित्वा दीर्घो भविष्यतीति चेन्न। अंगवृत्तपरि
भाषायाः सिद्धांतेऽसत्वेनाकृतसार्वत्रिदीर्घव्यावृत्त्याकारस्य चारितार्थ्येनापवादत्वेन दीर्घं वाधित्वा पररूपापत्तेरि
त्याशयात्। दिवउदितीति। नन्वेत्र चारितार्थ्याभावादज्ञापकमिदं अर्धमात्रिकव्यंजनस्येष्टत्वादृश्येनैकमात्रि
कोकारेपि दीर्घस्याप्राप्तेः। नच ग्रश्चेति सूत्रे कग्रहणाकरणे लाघवेनक्त्वोरित्यत्र क्ङितीत्यस्यानुवृत्तौ द्युभ्यामित्यादा
वूठिहृस्वश्रवणार्थं नित्यत्वात्पूर्वं दिव उत्वं तु नत्वांगत्वात्तस्यैव प्राप्तेरिति वाच्यं। प्रतिपदविधित्वेन शीघ्रोपस्थि
त्या दिव इत्येवस्यादिति चेन्न॥ उत्व्यपि वकारस्य तयात्वेनोभयोः समत्वादित्याशयात्। पक्षद्वयसाधारणमपि तद
सीत्याह। कृतउदितीति। नच न परत्वं द्वलोप इति दीर्घवाधनार्थमिति वाच्यं। सुपत्रराजिनावाणा

ज्वलिताइव पन्नगाः। निर्क्रतोंऽशुमाभासंतसवितुः रश्मयो यथेति रामायणप्रयोगविरोधात्।
उरण्रपर इति सूत्रेः णुग्रहणाभावे ऊरपर इति भाष्यविरोधाच्च स्पष्टं चेदंतत्रैव शेखरे। धर्मिग्राहकमानाद्देश 
विषय इयं तेन सनाशंसतेनादिहलभ्य इत्यादौ न दोषः। यद्यपि दीर्घेणार्थस्याभिधानं नास्ति सिद्धानामेव शब्दा 

नामन्वाख्यानमित्यणुदित्सूत्रभाष्यान्न दोषस्तथापि लक्षणैकचक्षुष्कान्प्रत्यनिप्रवृत्तं शास्त्रमिति बोध्यं। नन्वेव
मूदुपधाया गोह इत्यत्र दीर्घनिर्देशो व्यर्थः। उदुपधाया गोह इत्यनेनैवेष्टसिद्धिरिति चेन्न। दोषो णाविस्यत्रेत दनुवृ
त्ता वांतरतम्याद्दूषयतीत्यत्र द्विमात्रसिद्धये दोषइति विकृतनिर्देशस्य कर्तव्यतापत्तेस्तत्प्रत्याख्यानपरभाष्यासंग
तेश्च। नच दुष इत्युक्तावपि गुणे द्विमात्रसिद्धौ उ कर्तव्यतेति वाच्यं। तत्र कौंडिन्यन्यायेन तदुत्तरं चारितार्थ्येन उत्वेन गुण
वाधापत्त्या दुषयतीत्यनिष्टापत्तेः। नचैवैयर्थ्यं गुणवाधेन कृतार्थत्वात्। न च तावत्प्रयोजनत्वेन धातुलोप इत्यनंतरं।
पाठे नैव सिद्धाविह करणं व्यर्थमेवेति वाच्यं। लाघवाभावात्। पाठस्याशोकवनिकान्यायेन चरितार्थत्वाच्च। ममतु ऊ
दित्यनुवृत्तौ स्थानेंतरतम इत्यस्य प्राप्यमाणानामनंतरतमव्यावर्तकत्वेन प्रवृत्तौ न दोषो नापि भाष्यासंगतिरिति बोध्यं
एतेन उऊ इति हृस्वदीर्घप्रश्लेषेण गोह इति विकृतनिर्देशप्रत्याख्यानेन विरुद्धेयमिति केषांचिदुक्तिरप्यपास्ता। उदु
पधाया गुह इत्युक्तौ उक्तन्यायेन गुणवाधकत्वापत्तौ गुहयतीत्यनिष्टापत्तेश्च। नच क्ङिति विषये क्ङितिचेति गुणनिषेधे
न तत्र चारितार्थ्ये नोक्तन्यायाप्रवृत्तौ परत्वाद्गुणोऽइष्टसिद्धिरिति वाच्यं। निषेधेनापि तत्प्राप्तियोग्यतानपायात्। तेना
पिनसैइत्यस्यत। अतएव संबुद्धौ नलोपनिषेधेन रुत्वस्य चारितार्थ्येपि अपवादो रुर्नलोपं वाधिष्यत इति भाष्य

संगतिः। किंचोत्तरसूत्रेपि तत्प्रत्याख्यानस्य चिकीर्षितत्वेन तदर्थं यत्नांतरस्यावश्यकतापत्तेः। प्रश्लेषे तु दीर्घस्य-
रितत्वबलादनुवृत्तिसामर्थ्याच्चेष्टसिद्धेः। यद्यपि ह्रस्वोकारकरणेपि भाव्यमानोप्युकारस्सवर्णान्गृह्णातीत्यनेनेष्ट-
सिद्धिर्भविष्यति। ऊदुपधाया इत्यत्र विवरणे उक्तं तथापि तदुक्तयुक्त्याऽस्वरसग्रस्तमत एव तत्त्वचकमाहुरित्युक्त-
मिति बोध्यं स्वातंत्र्येण तत्प्रत्याख्यानप्रकारस्तु प्रयोजनानामत्यल्पत्वेनादसोसेरित्यत्र ऊ इति दीर्घपाठ इत्युक्तं प्रागि-
ति विशदं भाष्यतत्त्वविदां॥ गवे हितमिति। वाक्य इव समासेपि कुतोऽत्र वादयोनेति भावः। नलुमतेति निषेध-
लुनप्रत्यासत्त्या लुप्तप्रत्ययनिमित्तकांगसंज्ञोद्देश्यकविधावेव तल्लब्धेरंगीकारात्। स्थानिवत्सूत्रेण सिद्धेः। ऽल्विध्यर्थ-
मिदमिति। अत्र तृणेडित्यादौ आशीरित्यादौ च तृणह इम् शास इदङ्हलोरिति च सिद्ध्यति। सुदृषत्प्रासाद इत्यत्र सो-
र्मनसी अलोमोषसी इति निस्वरोऽत्वसंतस्येति दीर्घश्च न भवति। मन साहचर्याद्धातुना साहचर्याच्च श्रूयमाणासंत-
स्येवोभयत्र ग्रहणात्। तल्लक्षणमित्येव सिद्धे प्रत्ययलक्षणं ग्रहणं प्रत्ययनिमित्तकमेवेत्यर्थोपि द्रष्टव्यस्तेन
प्रत्ययस्येतराविशेषणत्वेपि गोहितमित्यादाववादिन। नचास्तु उपश्लिष्टस्येचोयवायावो भवंतीत्यर्थेन प्रत्यय-
स्येतरविशेषणत्वमेवेति वाच्यं। एवं सति सर्वनामस्थाने चासंबुद्धौ ह्रस्वस्य गुणः त्रिचतुरोरित्यादिविधौ प्रत्यय-



लक्षणानापन्नावनिष्ठत्वेः तस्यादितराविशेषणत्वमित्यस्य समानाधिकरणेतराविशेषणत्वमित्यर्थो वक्तव्यः॥
एवं च प्रकृते तत्त्वमस्त्येवेत्याहुः। वस्तुतो वार्तिकमतेऽल्विध्यर्थमेव प्रत्ययलक्षणसूत्रारंभोऽन्यत्र तु स्थानिवत्त्वेनै-
वेष्टसिद्धिस्तत्रास्य प्रवृत्तेः फलाभावात्। एवं च सर्वनामस्थाने इत्यादावस्य प्रवृत्तावपि क्षत्यभावेन समानाधिक-
रणेत्यादेरनुपयोगात्। अन्यथा सुलिङंतं सन्यङोः सर्वस्य सुपीत्यादावगत्या तदर्थं यत्नांतरस्य कर्तव्यतापत्तेश्चेति
दिक्। देवदत्तश्चिकीर्षतीत्यादाविति। आदिना देवदत्तो गार्ग्य इत्यस्य परिग्रहः। सन्नंतत्वादित्यादिना यजंतत्व-
परिग्रहः। धातुत्वादित्यादिना देवदत्तो गार्ग्य इत्यत्र प्राप्तप्रतिपादकत्वस्य संग्रहो बोध्यः। ननु विशेष्यासन्निधाना-
त्कथं तेन सिद्धिः सोऽत आह। स चेति। ननु नित्यं सइत्युत्तरपदग्रहणे न विशेष्यांतरसत्वेपि तत्स्वीकारेणात एव वनो-
रचेत्यादौ न दोष इति नेदं चमत्कृतमिति चेत्। अयं भावः। विशेष्यांतरासत्त्वे इत्यस्योपस्थितत्वात्तदादीत्यस्य स्त्रीप्रत्य-
—ये चेति निषेधेनासत्त्वे इत्यर्थः। तेनातिराजकुमारिरित्येतद्विषयके गोस्त्रियोरिति सूत्रे तदादिनियमाभावेपि तदं-
तविधौ ह्रस्वसिद्धिः। तत्रोपसर्जनस्येति तु न विशेषणं गोशब्देपि तदापत्तौ अतिसुगौरित्यादौ ह्रस्वापत्तेः। यद्यपि त-
दादेरित्युपस्थितविशेष्यमादाय तदंतविधिरन्यत्र तु शब्दस्वरूपमिति युक्तं वक्तुं। तथापि तदादीत्यस्यार्थाधि-

शांकरी० कारानुरोधेन प्रत्ययविधानावधिरूपस्य ग्रहणे नवनीरचेत्यादौ तेन सामानाधिकरण्याभावात् शब्दस्वरूपविशेष्य
१८ मादायैव तदंतविधेरावश्यकत्वादित्याशयात्। अत एव हलङ्ङ्याब्भ्य इति सूत्रे शब्दरत्ने बहुश्रेयसीत्यादौ लोपाय ङ्या
ब्भ्यामुपस्थिततदादीत्यनेन तन्मनस्युपेत्य शब्दरूपं विशेष्यमादाय तदंतत्वं संसाध्य सूतिसीत्येतदुपस्थितत
दादीत्येतद्बलेन द्वितीयस्तदंतविधिः साधितः। अत एव एङ्ह्रस्वादित्यत्रोक्तप्राचीनग्रघटकशेखरादिः संगच्छ
ते। अन्यथा कुलेत्यादिसिद्धये स्वधिकरणान्वयस्यावश्यकत्वेन एकदेशविकृतन्यायेन कर्त्तरदित्यादौ रेफांतत्व
कृतित्वसत्त्वेन कारांतेतदादित्वस्यापि लाभेन च हलो लोपापत्त्या प्राचोक्तरीतेरावश्यकत्वेन तदसंगतिः। अत्र चङ
नरादिप्रतिषेधप्रत्याख्यानभाष्यमपि मानं। धर्मिग्राहकमानात्परिभाषायामपि प्रत्ययप्रागभवितृत्वस्य तदेर्ग्रहा
णान्नोक्तदोष इत्यन्ये। एतेनार्थवत्परिभाषयेष्टसिद्धिरिति निरस्तं। विशिष्टरूपोपादानाभावात्। न चैवमपि
सनाद्यंता धातव इत्यत्रोपस्थिततदादीत्यस्यानन्वयादुक्तदोषस्तदवस्थ एवेति वाच्यं। क्वचिदुपस्थिततदादित्वे
लक्षणयात्तदितरपरत्वेनादोषात्। अत एव सुप्तिङंतमित्यत्रापि दोषोऽन्यथा पदसमुदायस्य परत्वापत्तावनिष्टापत्ते। राम० १८
रिति गूढाकूतं। यत्र प्रत्ययो निमित्तत्वेनाश्रियते इति। केण। लुङ्लङ्लृङ्क्ष्वस्यतासीसुपि चरो सुपीत्यादौ। एवं

चद्वेस्तेपरिभाषेइति बोध्यं यद्यपि प्रत्ययग्रहणे चापंचम्या इत्यस्य विशिष्यतयावक्ष्यमाणत्वेनात्रैतद्व्याख्या।
नेन युक्तं तथापि विशेष्यविशेषणभावस्याव्यवस्थितत्वेन तत्र तत्र लक्ष्यानुरोधेनैवेष्टसिद्धौ तन्निष्फलमित्य।
भिप्रायकत्वेनास्य प्राचामनुरोधित्वात्। घटृस्य सर्वस्य व्यवस्थार्थकत्वेन कृतार्थत्वादित्यन्यत्र स्पष्टं॥ गर्गादि।
भ्यो यञित्यादौ पूर्वं यञो विधानाभावात्प्रत्ययत्वाभावेन विहितत्वेतु पंचम्याः कृतार्थत्वेन पुनः प्रवृत्तौ मानाभावे
नचास्याविहितप्रत्ययविषयत्वं बोध्यं। नन्वेवं प्रत्ययग्रहणे तदादिनियमेनाधिकव्यावृत्तिर्न तु न्यूनस्येति तेन
इयन्मात्रमित्यादौ वत्वं तान्स्वार्थ इति मात्रचः सिद्धिः अस्यापत्यमित्यदंतादत इञो ञ्चेति फक्कसिद्धिश्चेत्यनुपस
र्जनादिति सूत्रविवरणरीत्या मुमनायत इत्यादावुपसर्गस्य पृथक्करणेन जातसमासाभावः कल्प्यत इति तिङ।
नोक्तरीत्या मनः शब्दस्य न विशिष्टस्येति तत्र त्वस्य शेखररीत्या च देवदत्तश्चिकीर्षतीत्यादावधिकव्यावृत्तावपि
ईर्ष इत्यस्य धातुत्वापत्तावुक्तदोषापत्तिः। अत एव भाष्ये प्राकरोदित्यादौ देवदत्तो गार्ग्यः परमगार्ग्यायण इत्या
दौ चाधिकव्यावृत्तिः फलमुक्तमिति चेन्न॥ देवदत्तस्यापत्यमिति विग्रहे वयवेपिस्कार्याभावांगीकारेण ष
ष्ठ्यंतात्कृतसंधेरपत्यमित्यर्थे विधीयमान इञ् दत्तशब्दादपि स्यात्। राज्ञः पुरुष इत्यादाववयवस्य ज्ञस इ।

त्यस्य षष्ठ्यंतत्वेन समासः स्यात्। ऋद्धस्य राज्ञः पुरुष इति समुदाये तद्व्याप्तत्वावपि न्यूनेन तदभावात्। तस्मादधि-
कव्याप्तिरिव न्यूनव्याप्तिरप्यवश्यं वाच्या। सा च मुख्यव्यवहारविषये इयन्मात्रमित्यादौ त्वतिदेशेन तत्वमि-
ति न तत्र दोषः। भाष्ये तूपलक्षणतया नेयं। अन्यथा ऽनया समुदायव्याप्तिसिद्धावपि अवयवव्याप्तेरकरणे न तत्र
तत्र न्यूनतापत्तेः उद्योतादयस्तु तत्रत्यकैयटानुरोधिन इति न तद्विरोधः। सुमनायत इत्यत्र तु उपसर्गस्य पृथक्करणे
नज्ञातसमासाभावकल्पने ऽपि सुपः समुदायविहितत्वेनैतनाधिकव्याप्तेरशक्यत्वात् तत्त्वशेखरश्चिंत्य एव। त-
स्मात् तत्र समुदायादनुत्पत्तिरेव पृथक्करणेन बोध्यत इति तत्वं। उगितश्चेति सूत्रे भाष्ये इति। ननु प्रत्ययाप्रत्ययग्रह-
णे तत्प्रवृत्तावपि वनो र चेत्यत्र वा ऽगितश्चेत्यत्रापि उगिदंतात् इत्यर्थे निर्गोमतीत्यादौ न दोषः। न च तदादीत्यस्यो-
पस्थितौ उगित्प्रातिपदिके तदादित्वाभावान्ङीबनापत्तिरिति वाच्यं। प्रत्ययाप्रत्ययकोटिद्वयस्य सत्वेन तत्र वा।
क्यभेदेनोगिदंतादिति व्याख्याने नोगित्प्रातिपदिकेष्वप्यदोषादिति चेत् तर्हि फलाभावात् तदप्रवृत्तिरित्याशयात्। अत
एव संज्ञाविधाविति परिभाषाज्ञापकपरसुप्तिङंतमिति सूत्रस्य भाष्यसंगतिः। अन्यथा प्रदेशे नलोपः प्रातिप- राम·
दिकांतस्येत्यादौ तदंतविधिसत्वेन प्रत्ययमात्रस्य पदसंज्ञासत्वेपि ज्ञापकस्याचारितार्थ्येनासंगतिः। तस्मात् १९

थ्यात् प्रदेशे तदभावे तु न युक्त इति वक्ष्यते। नलोपविधावपि वाक्यभेदेनोगित्कारेतु फलाभावस्तुल्य एवेति बोध्यं
। यत्त्ववयवावयवः समुदायावयव इति न्यायेन निर्यवमतीत्यादिसिद्धौ प्रत्ययाप्रत्ययग्रहणेपि तदप्रवृत्तौ क्ष-
त्यभाव इति तन्न। अवयवावयवत्वात् पूर्वं यत्रावयवस्यावस्थानं तत्रैव लोकसिद्धेन ग्रहणबोधनात्। नन्वेवं प्रत्य-
याप्रत्ययग्रहणे सति तदप्रवृत्तौ सनाद्यंता इत्यत्रापि प्रतीषिषतीति प्रतीकस्य शेखरोक्तरीत्या सन इति प्रत्ययाप्रत्य-
यग्रहणे न देवदत्तश्चिकीर्षतीति पूर्वोक्तोदाहरणासंगतिः। तत्र हि अभ्यासांत्यस्याज्झनेति दीर्घेन भवत्यनांग-
त्वान्निषेधस्यादावुत्तरखंडे साप्रदाद्योरिति वारणाय तावेव सुप्तिङौ यो तन्तः परो सैव च प्रकृतिराद्यात्वादि-
ग्रहणे च कृत्तद्धितेत्यागं तु नामत्वेति निवेश इत्यर्थकैकाचो द्वे इति सूत्रस्थभाष्ये णोत्तरखंडस्य सनं प्रत्याधिकारस्थ-
त्वाभावेन प्रत्ययत्वाभावात् संनंतत्वं तु स्वरूपतो ऽस्त्येवेति तदंतस्य धातुत्वं भवत्येव। सन्यन इत्यस्यांगावयवा-
भ्यासस्यानइत्यस्यात्संनिइत्यर्थेनैत्वमपि सुलभमित्युक्तं। तत्र षत्वं तु पूर्वत्रासिद्धमद्वित्व इत्युक्तेः षत्वे कृते द्वित्व-
मित्याशयः। न च सन्यङोरित्यत्र लिटि धातोरित्यतो धातोरित्यनुवृत्तेः पूर्वं धातुत्वे सत्येव द्वित्वप्रवृत्त्या प्रतीष-
इत्यवस्थायामेव सनाद्यंता इत्यस्य प्रवृत्तेः। न च प्रत्ययाप्रत्ययग्रहणमिति वाच्यं। एवं सति कृतद्वित्वस्य धातुत्वा-

भावेनततोलङाद्यनुत्पत्तेः। षाष्ठद्वित्वस्यद्विरुच्चारणारूपत्वेनविकाराभावेनलक्ष्येलक्षणास्येतिन्यायाप्रवृत्त्यापु
नर्धातुत्वेतुप्रत्ययाप्रत्ययग्रहणस्यानीवसत्वात्। वस्तुतः पूर्वंधातुत्वेधातोरित्यस्यत्तिवादिविधौविहितविशे
षणत्वेनांतरंगत्वात्तिवाद्युत्तरंसत्त्वेनसमुदायस्यप्रथमैकाच्त्वादादेश्वसापेक्षत्वेनद्वित्वप्रवृत्तेः। लिटिधातो।
रित्यत्रधातुग्रहणांनिष्ठत्तुत्तावत्सान्यासिकमितिभाष्योक्तेर्धातोरित्यस्यनिवृत्त्याशब्दांतरप्राप्तिकधातुसंज्ञाया
अप्रवृत्तेश्चेतिचेन्न। देवदत्तोगार्ग्यःपरमगार्ग्यायणइत्यादेरविवक्षितत्वादादिपदेनसूचितएव। प्रत्ययग्रह
णेचापंचम्याइति। यद्यपिभाष्येतदंतविधिप्रयोजनकथनावसरेप्रत्ययग्रहणांचापचम्याःप्रयोजनमित्ये
वोक्तंतथापिप्रत्ययग्रहणंचेतिपूर्ववाक्येनप्राप्तेतदंतविधिरेवप्रत्यासत्त्यापंचम्याइत्यनेननिषिध्यतइत्यर्थ
तोलभ्यं। विधौतुनास्योपयोगः। तत्रान्यथावारणस्यप्रागुक्तत्वात्। अतःपर्यवसितमाह। परिगृह्यतइति। अत्र
यतेइत्यर्थः। प्रयोजनांतरमाह। यथेति। ननुचरितमित्यादौनत्ववारणायतत्ररदाभ्यामितितकारविशेषणं।
निष्ठेतितत्रलुप्तषष्ठीकमितिनिकदेशान्वयः। एवंचपंचम्यंतान्यप्रत्ययाश्रयणाभावादुक्तदोषस्तदवस्थएवेति रा.म.
चेन्न। प्रत्ययावयवेपि —— प्रत्ययत्वव्यवहारस्यप्रत्ययलोपइतिसूत्रेप्रत्ययग्रहणेनज्ञापितत्वादतएवादे २०

शप्रत्यययोरिदुदुपधस्येत्यादौलक्षणाश्रयणांनसात्यदाद्योरितिचरितार्थमितिबोध्यं। यद्वाव्युत्पत्तिवैचित्र्ये
णरदाभ्यामितिनिष्ठायामित्येकदेशोपिविशेषणंयदागमपरिभाषायाअनित्यत्वादुक्तेर्नदोषः। लुप्तविभ
क्त्यंतत्वकल्पनेगौरवं। निर्दिश्यमानपरिभाषयातुनात्रनिर्वाहः। निष्ठापदस्यैतच्छास्त्रसंकेतितत्वादत्रचदंभा।
व्यमपिमानमित्युक्तं। यद्यप्य —— त्यविकारेऽन्यसदेशस्येत्येवेदंसिद्धंतथापितीर्णवानित्यादौदोषःस्यादेवअतए
वेत्यादावित्युक्तं। नदोषइति। नचतत्रतदंतग्रहणाभावेपिङ्याब्भ्यांपरस्याष्टकस्यहल्लोलोपइत्यर्थेनदोषइति
वाच्यं। अनयातदंतांशानुपस्थितावपितदादौत्यंशोपस्थित्यातदादेःपरोयोङीत्यर्थेवृत्तेसुतिसीनामपिप्रत्ययत्वे
नोपस्थिततद्विधानादवधिभूततदादौत्येतद्विशेष्यतयाङ्याबंतात्तदादेरित्यर्थापत्तौवहुश्रेयसीत्यादौसुलोपा
नापत्तेः आदिनास्त्रीभ्योढगित्यादेःसंग्रहोबोध्यः। एतेनतदंतांशस्यनिषेधेपिहल्ङ्याविन्यत्रनदोषइतिपरा।
स्तं। यत्रप्रत्ययोनिमित्तत्वेनाश्रियतेएवंयत्रापीत्यनेनयोरनयैवोक्तोङीकारोबोध्यः। तत्रयत्रकेणाःसुपिचेत्या
दौपंचम्यंतासन्निधानंतत्राप्याहृत्तयोग्यंतत्पदमादायनिषेधोबोध्यस्तत्रप्रमाणामप्याह। अतएवेति। नाहर्षा
तन्यदमादायापितत्प्रवृत्तेरङीकारादेवेत्यर्थः कुमारीब्राह्मणीरूपेति। लौकिकवाक्यमिदंरूपंतुकुमारब्राह्मणि

शांकरी रूपेतिकर्मधारयेपुंवत्त्वविधानात्।यद्वाकुमारीब्राह्मणिरूपायस्यांनगर्यांइतिबहुव्रीहिस्तत्रजातेस्त्रेतिनि
२१ षेधात्तुपुंवत्त्वं।कुमारादिशब्दानांवैकल्पिकजातिकार्यमित्यस्यभाष्यादिसंमतत्वात्॥प्रथमत्यागेवीजंतु
धर्मिग्राहकमानात्प्रत्ययत्वतद्व्याप्यधर्मावच्छिन्नव्यापकशब्दोपादानेएवैतत्प्रवृत्तिरूपं।अतएवरात्रेःकृति
विभाषाइत्यत्रननिषेधः।रात्रेस्तदसंभवस्तुनाचारक्विबंताच्चजादौतत्संभवात्।उपसर्गस्यघञीत्यत्रतुउप
सर्गात्तुङोऽसंभवान्ननिषेधः।कुमारब्राह्मणितरेत्यत्रतुरूपबादिसाहचर्येणह्रस्वोवारणीयः।संज्ञाविधा
वित्यनेनतुनसिद्धिः।तत्रसंज्ञाविधाविति यदिकर्मषष्ठ्यासमासस्तर्हितरप्तमपौघइत्यत्रासत्यपितदंतविधौ
प्रदेशेघरूपेत्यादौतदंतग्रहणाद्दोषतादवस्थ्यात्।अथवाकरणतृतीययासमासः।घसंज्ञायांतदंतविधौप्र
देशेघरूपेत्यादौप्रत्ययग्रहणाभावान्निषेधवैयर्थ्यप्रसंगात्।अथवासंबंधसामान्यषष्ठ्यासमासः।संज्ञायावि
धौसंज्ञयाचविधाविति निष्ठेतिपूर्वनिपातविधौनिष्ठामात्रस्यपूर्वनिपातापत्तिः।नचकर्मषष्ठ्यासमासेन।
विधौनिषेधराचास्तु"प्रदेशेतत्सामर्थ्यात्तदभावोस्त्वितिशेखरप्रतिपादितमेवेतिवाच्यं।प्रत्ययग्रहणेचापंच राम.
म्याइत्यस्यदृषत्तीरादिसुग्रहणानपर्ययेनविधिरितिसूत्रभाष्यविरोधापत्तेः।रात्रेःकृतिविभाषेत्यत्रापित। २१

दभावापत्तेश्चनिषेधासत्त्वेप्रदेशेनदंतद्वयेगौरपरमब्राह्मणितरेत्यत्रह्रस्वःप्राप्नोति सत्त्वेतुतस्मिन्विधौनन्निषे
धेप्रदेशेतदंतविधौगौरब्राह्मणितरेत्यत्रैवप्राप्नोतीतिफलभेदस्ययेनविधिरित्यत्रकैयटेनैवोक्तत्वाच्च।निष्ठे।
त्यत्रोक्तदोषापत्तेश्चतत्रत्यशेखरस्यप्राचामनुरोधित्वमेवेतिबोध्यं।उत्तरपदाधिकारइतितुप्रत्यासत्त्याउ।
त्तरपदविशेष्यतयाप्राप्ततदंतविधेरेवनिषेधिका।अतएवघरूपेत्यत्रउत्तरपदाक्षिप्तपूर्वपदेनप्राप्तस्य
ननिषेधः अन्यथाभाषितपुंस्कादित्येतत्सामानाधिकरण्येनानेकाचःभाषितपुंस्काद्योङीतस्यह्रस्वइत्यर्था
पत्तौयतिरूपेत्यादौह्रस्वानापत्तेः।इणःशतरिङीपिचरूपमेतत्।अतएवघ्यङ्इतिसूत्रेघ्यङंतस्यपूर्वपद
स्येत्यर्थसिद्धिः।अन्यथायोग्यत्वात्तदाक्षेपाभावेनातिकारीषगंध्यापुत्रइत्यत्रापितदापत्तिः।एतेनसुपिचेत्या
दाविवयोग्यस्यपंचम्यंतात्परत्वमादायप्रत्ययग्रहणेचापंचम्याइत्यनेनैवेष्टसिद्धावियंव्यर्थेत्यपास्तं।शब्द
स्वरूपंविशेष्यमादायप्राप्ततदंतस्यानेननिषेधेपिउत्तरपदेइत्यादिविशेष्यत्वेनप्राप्तस्यतदलाभाच्च॥रात्रेः
कृतीत्यादावपितदापत्तेश्च॥अतएवलेखग्रहणस्यज्ञापकत्वसंगतिः।अन्यथानेननिषेधेलेखशब्देतदप्रा
प्तौविध्यर्थत्वंस्यादितितत्संगतिरितिदिक्।नन्वेवंपरमकारीषगंधीपुत्रइति।इवशब्दोभिन्नक्रमः।एवंप्र।

शांकरी त्ययग्रहणादिति परिभाषास्वीकारे अतिकारीषगंध्यापुत्र इत्यत्रैवात्रापि स्यादित्यर्थः। मरुवद्वृशीनरे जलमितिय
२२ ञातत्र न तथात्रापि नेति यावत्। यद्वा यथाश्रुतमेव ष्यङ इति प्रत्ययग्रहणेन शब्दरूपविशेष्यमादाय तदंत।
विधावुत्तरपदाक्षिप्तपूर्वपदमपि विशेष्यमिति ष्यङंतांत इत्यर्थस्य परमकारीषगंधीत्याद्यर्थमावश्यकत्वे
ननत्रैवात्रापि स्यादित्यर्थः। ननु विषयसप्तमीत्वस्वीकारे प्रत्यये गृह्यमाणे सत्यनुपसर्जनस्त्रीप्रत्ययविषये।
तदादिनियमो नान्यत्र तु सोऽस्त्येवेत्यर्थे न तत्तद्विषयकवाक्योपप्लवसत्त्वेनानुपसर्जनविषयकवाक्यस्य परम
कारीषगंधीपुत्र इत्यादौ संप्रसारणार्थतया सार्थक्येऽपि उपसर्जनं यत् ष्यङ् तदादितदंतस्य पूर्वपदस्य संप्रसारण
मित्युपसर्जनविषयकवाक्यस्य वैयर्थ्यमेव तादृशलक्ष्याभावात्। यद्यपि कारीषगंध्यापतिः स्वामिनी यस्येति व
हुव्रीहौ तत्संभवस्तथापि परिभाषायां प्रत्यासत्तेराश्रयणेन यस्य समुदायस्य स्त्रीप्रत्ययांतत्वमाने यं तदर्थं प्रत्युपस
र्जनत्वे एव तत्तदादिनियमांगीकारादिति चेन्न। प्रतिलक्ष्यं लक्षणोपप्लवस्य सर्वत्र सत्त्वेऽपि विप्रतिषेधे परमित्यादि
नातत्तद्विषयकत्वाक्योपप्लवाभावबोधनमिवोपसर्जनविषयेऽपि तदादिनियमो भवतीति अनेन तद्विषयकवा राम.
क्यस्येवाभावबोधनात्। सामान्यतः प्राप्ततदादिनियमस्यानुपसर्जनविषयेऽपि निषेधमात्रार्थकत्वेऽपि उपसर्ज २२

नविषयांशे तात्पर्याभावादन्ये केचित्तु कारीषगंध्यामतिक्रांता कारीषगंध्या विनापि प्रत्ययं पूर्वपदस्य लोपः। त।
स्याः पतिरिति कारीषगंधीपतिरित्यत्र तत्संभवोऽप्यस्तीत्याहुः। नन्वेवं दृष्टामालेत्यादौ आबंतात्सुबुत्पत्त्यर्थं ङ्याब्
ग्रहणमावश्यकं तदादिनियमाभावादेवं च तत्प्रत्याख्यानासंगतिः। न ह्यत्र लिंगविशिष्टपरिभाषावसरः। अत्र हि त
स्य दृष्टामालेत्यादेः समुदायस्य प्रातिपदिकत्वाभावात्तस्य आमृदृष्टमाला देवदत्तेत्यादौ एकांतरत्वेन एकांतरता
पतिरिति चेत्तत्त्वं। प्रत्याख्यानपरभाष्यप्रामाण्येन प्रातिपदिकसाहचर्येण च पृथग्योपस्थापकविभक्त्यानव
यवकङ्याबंतस्यैव ग्रहणात्। प्रत्येकमपि पदत्वसत्त्वे नैकांतरत्वाभावाच्चादोषादिति स्पष्टं ङ्याप्सूत्रे शब्दरत्ने इति
वोध्याः। इयं वाचनिक्येवेति। केचित्तु प्रत्ययग्रहणे यस्मादिति परिभाषाग्राहके पूर्वोक्तयस्मात्प्रत्ययविधिस्तदादीनि
योगविभागेन ङ्यङ्वङ् इत्यतो स्त्रीत्यनुवर्त्य शब्दाधिकाराश्रयणादर्थपरत्वं संपाद्य स्त्रीप्रत्यय इत्यर्थे यूस्त्र्या
स्ये त्यतः स्त्र्याख्येत्यनुवर्त्य तेन स्त्रीप्रत्ययस्यैव विशेषणात्प्रधानस्त्रीवाचकस्त्रीप्रत्ययभिन्नप्रत्ययग्रहणेन
दादिविधिरित्यर्थादियं लब्धेत्याहुः। तत्र भाष्यानुग्रहो विचार्यः। यत्तु ष्यङ इति सूत्रेऽनुपसर्जनस्येत्येवास्तु तं
त्सामर्थ्यात्तदादिनियमाभावः। एवं च ष्यङंतस्यानुपसर्जनत्वाव्यभिचारात् ष्यङो विशेषणं तत्। अनुपसर्जनं य

शांकरी· त्व्यङ्न्तदंतस्य संप्रसारणमित्यर्थे ऽतिकारीषगंध्यापुत्र इत्यादौ न दोषः। गोस्त्रियोरित्यत्रापि शब्दरूपं विशेष्य।
२३ मादाय लब्ध तदंतेनोपसर्जनस्य विशेषणात्स्त्रीप्रत्ययांतांतं यदुपसर्जनं तदंतस्य प्रातिपदिकस्येत्यर्थेनातिरा
जकुमारिरित्यादावपि न दोषः। अतिकुमारिरित्यादौ तु व्यपदेशिवद्भावो बोध्यः। एवं च प्रयोजनानामन्यथासि
द्धत्वेन नैषा लक्ष्यसाधिकेति चेन्न॥ अतिगोवष्कयणीत्यादौ वष्कयणीशब्दस्य गुणशब्दत्वाल्लौकिकोपसर्जन
त्वेपि तदंतस्य गोस्त्रियोपसर्जनत्व सत्वेन ह्रस्वापत्तेः। न च सिद्धांतेपि तत्र तदंतद्वये बाधकाभावेनेष्टापत्तिरिति
वाच्यं। गोस्त्रियोरिति सूत्रे भाष्ये ऽतिराजकुमारीत्यत्र ह्रस्वत्वमाशंक्योक्तपरिभाषया कृतसमाधेरेव तद्बाधकत्वस
त्वात्। अन्यथा परिभाषायां अस्वीकारेपि त्वदुक्तरीत्या दोषस्य दुष्परिहारत्वेन तदसंगतिः स्पष्टैव। उपसर्जनस्य
विशेषणत्वे गोशब्दांशोपि न तदंतविधौ शोभना गौः सुगौः न गौरगौः न पूजनान्नञ्स्तत्पुरुषादित्याभ्यां समासो।
ना भावः। परमा सुगौररगौर्वा यस्य परमसुगोः परमागौरित्यादावपि तदापत्तेश्च। ससहायेव्यपदेशिवद्भावाप्रवृ
त्त्यांतिमालं चित्रगुरित्यादावगतेश्चेत्यलं। नन्वेवं तरप्तमपाविति। अत्र यद्वक्तव्यं तदुक्तं कर्मणि क्तांत इति। क्ते चे। राम·
त्यतः। क्ते इति तृतीया कर्मणीत्यतः कर्मणीति चानुवर्तत इति भावः। पदात्परत्वाभावेन चेति। न च कुत्सने च सुपी २३

त्यतः प्राक्यदाधिकार इति स्वयमेव पदादिति सूत्रे स्थापितत्वेन गतिरनंतर इत्यस्य ततः परत्वेनायुक्तमिदमिति चे।
न्नहेतौ च शब्दः यतः पदादिस्थत्वमतः पदात्परत्वाभाव इत्यर्थः। छंदोबद्धवाक्ये यत्र पादादिस्थत्वं तत्र पदात्पर
त्वाभावस्यानुमाने यत्रापदादिस्थत्वं तत्र तत्परस्येति नान्यत्रातिप्रसंग इति भावः। इत्थमेव व्याख्येयं यथा
श्रुतत्वसंगतिः स्पष्टैवेति बोध्यं। एवं चाभ्युद्धृतमित्यस्य यदि पादादिस्थत्वं तदानंतरग्रहणस्य फलमिति नज्ञा
पकत्वमिति बोध्यं। यद्यपि भाष्ये ऽनंतरग्रहणमनर्थकं गतिर्गताविति वचनादित्युक्तं। तथापि तदेकदेश्यु
क्तमुक्तयुक्तेः। अत एवाग्रे भवत्येषा परिभाषा कृद्ग्रहणे गतिकारकपूर्वस्यापीति। यदयमनंतरग्रहणं करोति
इत्युपसंहृतमिति न तेन तदधिकारबाध उचित इति बोध्यं। ननु तस्मात्साम्राण्यात्तदनधिकार एवास्तु। एवं च
नाभ्युद्धृतमित्यनंतरग्रहणस्य फलं ज्ञापकपरं भाष्यं त्वन्यथा योजनीयमित्याह। न चेत्यादि। अयं भावः।
बहुव्रीहौ प्रकृत्येत्यतः पूर्वपदग्रहणमत्रानुवर्तते। उत्तरत्रानुवृत्त्यर्थमन्यथा मंडूकप्लुत्यापत्तिः। एवं चाद्यु
दात्तोद्धृतशब्दस्याभिनासमासे प्राप्तस्य सतिशिष्टथाथादिस्वरस्यापि बाधनार्थमनंतरस्योदौ पूर्वपदत्वेपि॥
आद्युदा[illegible]ज्ञापकमिति भाष्याशयः। एवं च भाष्ययोरैक

शांकरी मेवनैकदेशयुक्तित्वकल्पनमपीति। नन्वेवमभ्युद्धृतमित्यत्रैवदूरादागतइत्यत्रापिप्राप्नोति। नचकारकाद्द
२४ त्तश्रुतयोरित्यत्रकारकादितियोगविभागेनकारकात्परंगतिपूर्वपदंक्तान्तमन्तोदात्तमित्यर्थकेनादोषइतिवा॥
व्यं एवंतर्हिकारकादेवपरंगतिपूर्वपदंक्तान्तमन्तोदात्तमितिनियमार्थकयोगविभागेनैवाभ्युद्धृतमित्यादौस्था
थ्यादिस्वराप्राप्त्याक्तहुत्तरप्रकृतिस्वरेणान्तोदात्तत्वसिद्धावनन्तरग्रहणस्यज्ञापितेप्यचारितार्थ्यात्भाष्यासंग
तेश्च। तस्मादुक्तन्यायाज्ज्ञापकपरभाष्यप्रामाण्याच्चपूर्वभाष्यस्यैकदेशयुक्तित्वेनाभ्युद्धृतमित्यादौव्यवहित
निवृत्त्यर्थमेव अनन्तरग्रहणमितिज्ञापकमेव। वस्तुतोभाष्येऽनन्तरग्रहणस्यप्रयोजनत्रयमुक्त्वाज्ञापका
र्थमेवस्थापितंनतुप्रयोजनान्तरमपीतितत्रव्यवहितनिवृत्त्यर्थंनततगतिर्गताविति परत्वाद्बाधात्। नाप्यपूर्व
पदत्वेस्वरार्थं। कारकादितियोगविभागेनैवसिद्धेः। तस्मात्तज्ज्ञापकार्थमेवेतच्चान्यत्रैवात्रापिज्ञापकत्वंकिंतु
बोधकमात्रमितिलभ्यतइतिबोध्यं। यत्रेति। ननुयत्रगतिकारकसमभिव्याहृतंकृदन्तंतत्रतद्विशिष्टस्यैवग्रहणाद्द
देवदत्तेनकृतमित्यादौकृतमित्यादेःप्रातिपदिकत्वंनस्यात्। समुदायस्यतत्त्वेपिसमासग्रहणकृतनियमे। राम.
नपरत्वाद्बाधादवयवस्यचकृदन्तत्वाभावादितिचेन्न। विध्युद्देश्यतावच्छेदकाक्रान्तस्यतस्यसमभिव्याहारेइ। २४

त्यर्थात्। अतएवगतिकारकोपपदानामित्यस्यसांकूटिनमितिफलमुक्तंभाष्ये। अन्यथान्त्यंतस्वार्थिकत्वेनसु
बुत्पत्तेःप्राक्प्रवृत्तावप्यनयापरिभाषयाविशिष्टादेवाणिसिद्धौनदसंगतिस्स्पष्टैव। तत्रापिप्रातिपदिकाधिका
रणवाक्यस्यान्तत्वेनविशिष्टोद्देश्यत्वाभावात्। परत्वादिति। उत्कृष्टत्वादपवादत्वादित्यर्थः। तक्रकौण्डिन्यन्यायादिति
भाव स्त्रीप्रत्ययेचेतिनिषेधविषयेव्याक्रोशीत्यादौचारितार्थ्येपितस्याप्रयोग्यतायास्तत्रापिसत्त्वात्। यद्यपिण-
चस्त्रियामित्यत्रनदादिनियमेनिषिद्धेसमुदायादेवभविष्यतीतिनास्यफलंतथापि अवयवात्तुतद्बाधतयेफ
लसत्त्वादितिभावः। अन्यथेति। अतएवभाष्येगतिकारकेत्युक्त्वाएवमप्यवयवाद्दुपेतिप्राप्नोतीत्याशंक्यानया-
समाहितं। नन्विति। तत्फलंतु अणिनियुक्तेइतिस्वरविधायके अस्यानुपस्थित्याकुत्रधारइत्यादौस्वरसिद्धिरिति।
बोध्यं। तेनेष्टकचितमिति। इष्टकेषीकेतिसूत्रेउत्तरपदाधिकारेणपूर्वपदाक्षेपात्तदन्तविधिरितिभावः। सचावश्य
कोन्यथापक्वाश्चइष्टकाश्चचिताश्चेतिसमाहारेपूर्वपदत्वाभावेपिह्रस्वापत्तेः। पक्वेष्टकचितमितिचेष्यतेइतिभा
वः। एतेनतदाक्षेपेफलाभावादितिमंदःपरास्तः। यत्तुयोर्थवानितिआद्यन्तवदितिसूत्रेभाष्येतन्न्यायाख्या
नायाश्रितलोकसिद्धन्यायप्रयोजनमियायजहारेत्यादिप्रदर्शितं। तत्रकैयटेनेत्थंवर्णितं। अर्थवान्योधातुस्स

शांकरी· दवयवएकोजिति। यद्यपितत्रभेदाभावादवयवत्वासंभवस्तथापिरातन्यायवशाद्बोद्धुंतदस्तीतिइग्यायेत्या
२५ दौएकाच्त्वोपपत्तिर्गौणी। अन्यपदार्थत्वेनविवक्षितेऽर्थस्योपादानेवर्तिपदार्थत्वेनतत्त्यागः प्रतिलक्ष्यंलक्षणोपप्ल
वादनर्थकसमुदायविषयउर्णुनावेत्यादौनदोषस्तद्विषयकलक्षणांतरस्यकल्पनादितिकैयटादयः। मुख्य
व्यवहारत्वादिति। अयंभावः। एवंसतिइग्यायेतिन्यायप्रयोजनंभाष्योक्तंविरुद्धंस्यात्। एकपदाऋगित्यादावि।
वार्थविशिष्टधातोरन्यपदार्थतयाइकारादेर्वर्णस्यतदवयवतयाचमुख्यव्यवहारस्यैवसत्त्वात्। नचभाष्येव्यव
हारस्येयायेत्यादौउक्तरीत्यासंभवेनसकृन्नोनाशिश्रियत् इतिवाच्यं। द्वित्वविधावर्थविशिष्टस्यान्यपदार्थत्वे।
नैकाचइतिबहुव्रीहावनर्थकेउर्णुनावेत्यादावगत्यातत्रप्रथमत्वस्याप्यतिदेशेनैववाच्यतयाचार्धजरतीयस्यानौ
चित्यादित्यादिनतत्रमुख्यव्यवहारमदिद्रियदितिवोध्यं। एकपदाऋगित्यत्रहिन्यायस्यास्यालौकिकसिद्धत्वप्रति
पादनावसरेयद्वर्णसमुदायः पदंपदसमुदायंऋक्इत्युच्यतेएकस्मिन्नपितत्प्रयुज्यतेएकपदाऋगित्युक्त्वात्र
र्थेनयुक्तोव्यपदेशः। पदंनामार्थः नामइतिप्रातिपदिकार्थस्त्वान्यपदार्थइतिमुख्यएवव्यवहारइत्युक्त्वापुत्रेतिदृष्टां राम·
तेनन्यायःसाधितोभाष्ये। तत्रत्यकैयटोक्तप्रकारस्तुनयुक्तइति। स्वयंभाष्यार्थमाह। ऋक्त्वादिति। असहायेइत्यस्या। २५

तिदिश्यमानधर्मवदसमभिव्याहारेत्यर्थः। ननुघटादिशब्देपिजराशब्दत्वातिदेशः स्यात्। व्यपदेशहेतुत्वभा
वेनाविद्यमानव्यपदेशेनचेयायेत्यादाविन्यायप्रवृत्तिरितिचेन्न। स्वसजातीयावधिव्यवहारस्यभेदनिबंध
नस्यचानेनानिदेशात्। अतएवदृष्टांतद्वयोल्लेखः। अस्तिचेयायेत्यादौएकाच्त्वावयवावयवित्वस्यप्रथमत्वस
जातीयनिष्ठधर्मस्यचानिर्देशः। सामान्यंचनतद्विधिविधेयकार्यनिरूपितोद्देश्यतावच्छेदकधर्माक्रांतसमुदायघ
टकत्वरूपमितिवोध्यं। नन्वेवमपिस्वस्मिन्स्वाव्यवहितपूर्वत्वस्यानिर्देशः प्राप्नोतितत्रश्चदधिमधुइत्यादौय।
णादिःस्यादितिचेन्न। ततद्विधौनेतन्निमित्तोपादानवैयर्थ्येनतदनतिदेशादितिदिक्। ननुवांतोयीत्यादाविति।
नन्वंतरेणापिपरिभाषांसामर्थ्यात्तदादेर्लाभः। अन्यथातदंतविधौयांतेइत्यर्थापत्त्यासूत्रानर्थक्यंस्पष्टमेवेतिचे
न्नागव्यितानाव्यितेत्यादौअल्लोपेकृतेयांतप्रत्ययसंभवात्। नचाल्लोपस्यस्थानिवत्त्वंनकारोपरेकुत्वविधानेनश्रो
त्रव्यवधानस्येवयांतेवांतविधानेनापिश्रोतयांतत्वस्यविवक्षणात्। नपदांतेतिनिषेधस्तुननःक्येइतिनियमे
नापदत्वात्। आदेशस्यपरपदस्यत्वाभावाच्च। किंचगोमयमततीतिगोमयानुक्षिपृतमाचष्टेणिचटिलोपेऽज्झ
लादेशत्वेनस्थानिवत्त्वाभावेनप्रत्ययस्ययांतत्वाक्षतेः अतएवाह। यस्मिन्विधिरिति। सप्तम्यंतपदार्थकस्तत्त

शांकरी २६

त्वस्य सर्वनाम्नो निर्देशः। सति सप्तमी न त्वधिकरणे औपश्लेषिके वा। ततो यीत्यादौ तत्संभवेपि नेड्वशीत्यादौ त-
दभावात्। यद्यपि तस्मिन्निति वद्यस्मिन्नित्यस्यापि सप्तम्यंतार्थ इत्यर्थस्सुवचस्तथापि इति शब्दाभावे नास्य
श्चेति वक्ष्यमाणविरोधेनाल्ग्रहणे इत्यनेनान्वये न तथानाश्रितः। अल्ग्रहणे इत्यस्य हि अधिकरणोल्युडन्त-
ल उच्चारणे इति नार्थः प्रत्याहारग्रहणे तस्मान्नुड्चीत्यादौ दोषापत्तेः। इको चिव्यंजने माभूदित्यत्र व्यंजनादाविति
व्याख्यानपरत्वेप्यविरोधापत्तेश्च। किंतु बाहुलकात्कर्मणि ल्युडन्तः अलः प्रतिपादकशब्दे सतीत्यर्थः। तदादौ विस्यत्र
तच्छब्देन सप्तम्यंतार्थः परामर्शनीयः। एवं च सप्तम्यंते विशेषणीभूते अल्प्रतिपादकशब्दे सति यद्विधानं तत्तदा-
दौ बोध्यमित्यर्थः फलितं इति बोध्यं। घञजपः पुंसीत्युक्तरूपवादश्यमित्युक्तं। वचनेन निर्वृत्ता वाचनिकी। इयं चे-
त्। नन्वार्धधातुकस्येड्वलादेरित्युक्तौ सामानाधिकरण्याभावाद्यस्मिन्निति परिभाषाया अप्रवृत्तौ तस्मिन्निति परिभाषाप्र-
वृत्त्या वल्सरकार्धधातुकस्येडित्यर्थे भविष्यतीत्यादावेव प्राप्नोति न तु भवितेत्यादावपीति नेड्वशीत्यादिनिषेधस्तु।
सुशर्मा देवदत्त इत्यादौ चरितार्थः। एवं चादिग्रहणं सफलमिति चेन्न। बहुलक्ष्यसंस्कारानुरोधेन तस्मान्नुड्ची- राम
त्यादावचीत्यस्येव वलीति सप्तम्याः षष्ठ्यर्थत्वांगीकारेण तस्मिन्नित्यस्याप्रवृत्त्या सामानाधिकरण्यस्यापि स- २६

त्वेन परिभाषाप्रवृत्तेर्निर्विघ्नत्वादित्याशयात्। तेन ङः सीति। ननु तदंतविध्यभावाय पदस्येत्यस्यैव वैयधिकरण्य-
स्यावश्यकत्वेन सामानाधिकरण्याभावादेव न तदादिविधिरत एव शेखरे पदावयवस्येत्यर्थ इति व्याख्या-
तं। अन्यथानेन तदभावेपि तदंतविधिर्दुर्वारः स्यादिति चेदयं भावः। पदस्येत्यधिकारोपि स्सुतन्त्वाङ्गकारेण वि-
शिष्यते। तत्र तदादिविधौ षट्सन्त इत्याद्यवकाशत्वेपि तदंतविधौ शास्त्राबोधिता ऽजव्यवहितहल्समु-
दायस्य सुट्शियोरित्यादिनिर्देशेनासाधुत्वबोधनेन सकारस्य संयोगांतलोपेन चङ्कारा व्यवहितपरोयः।
सकारस्तदंतस्य पदस्येत्यर्थे सूत्रस्याचरितार्थ्येन संयोगांतलोपबाधापेक्षयाक्लृप्तस्य स्युतान्त्यस्य बाधायै।
स्याच्च मादुपधायाश्चेत्यादौ स्त्रीकृतपदस्येत्यस्यावयवषष्ठ्यंतस्यैव सामर्थ्यात्स्वीकारं इत्यभिप्रेत्यैव शेखरे।
तथा व्याख्यानमिति बोध्यं। केचित्तु चिंत्यमिदं। लक्ष्यानुरोधेन शास्त्रप्रत्याख्यानस्याचमत्कारावहत्वेनादिग्र-
हणस्यावश्यकत्वात्। तत्तात्पर्यकमेव तदादिग्रहणमित्यस्य वक्तुं शक्यत्वात्। डः सो धुडिति न्यासे अतच्छ-
दोषाच्च। यथान्यासेपि भ्रंतेरंडा विवाहश्चेदादावेव कुतो न हीनित्यायेनांततो लक्ष्यानुरोधस्यावश्यकत्वेना-
दावेव तत्स्वीकारे दोषाच्च। तीक्ष्णसहसे सिचीत्यादावेकदेशान्वयलोके शास्त्रस्याप्यनावश्यकत्वाच्च। नयत्नकारा।

व्यवहितपरके छत्यादेः परस्य वल्लाद्यार्धधातुकस्येडित्याद्यर्थेन नैकदेशान्वय इति वोध्यं। एवं हि सति भ्रांतो यीत्या
द्यावप्युक्तरीत्या यकाराव्यवहितपरकयोरेदैतोः वांतादेशेः व्यवहितप्रत्यये परे इत्यर्थे र्याद्यादिप्रत्ययलाभे परि
भाषोच्छेदापत्तेः। प्राचां हलादावित्यादिग्रहणे न परिभाषानित्यत्वलाभेन ङः सीत्यादावदोषाच्च। एवमर्थैकदेशा
न्वयाकरणेन लाघवमतरा वहुज्झल्यइ ति सूत्रस्थं भाष्यमपि स्वरसतः संगच्छत इत्याहुः। ननु क्षियइतीति। क्षि।
योदीर्घादितिनत्वविधायके शास्त्र इत्यर्थः। नतु क्षियइति दीर्घविधायके निष्ठायामण्यदर्थे इति दीर्घविधायके
च तत्र दीर्घांतानुकरणस्याप्रयोजकत्वेन चिक्षियतुरित्यादौ अजादौ यद्रूपं तस्य कृते यङ्कस्यानुकरणत्वात् ह्र
स्वांतस्य तु नानुकरणं। विपराभ्यां जेरित्यादाविव परत्वादियङ् वाधित्वा गुणः स्यात्। न च नत्वविधावपि तथैवास्तु अ
त एव दीर्घादिति सार्थकमन्यथा दीर्घांतस्यैवानुकरणे तद्वैयर्थ्यमेवेति। अत एव तत्र शेखरे सुकृते यङ्कस्यानुक
रणाद्दीर्घग्रहणमन्यथा निर्देशेनैव सिद्धमित्युक्तमिति वाच्यं। दीर्घादित्यस्य सत्वे हि तत्र दीर्घांतानुकरणं तदभावे
कृते यङ्कस्यानुकरणमिति संभाव्येत्। तेन हि दीर्घांतानुकरणस्यैव बोधनादित्याशयात्॥ ❁ ॥ अतो न शेखरवि 
रोधः तएवाहज्ञापक इति। ननु नत्वविधायके क्षियइति इयङ् निर्देशो ज्ञापक इत्यर्थः। एतेनात्रापि कृते यङ्कस्या

नुकरणात्कथं ज्ञापकमित्यपास्तं। ननु रामाविति। यथोद्देशे तु नैतदुपयोगः। तत्र भविष्यति किंचिदनेन त्रयो
जनमिति न्यायेन नित्यमप्येकादेशं बाधित्वा परनिमित्तकत्वेनांतरंगत्वात्पदत्वे एकादेशेपि आनुमानिकस्या
निवत्त्वेन तस्य सौ लभ्यात्। अत एव हे रामेत्यादौ पदत्वसिद्धिः अन्यथा नित्यत्वात्सुलोपे सुबंतत्वस्य शास्त्रीयत्वे
न विशेषणतया ऽलाश्रयणे न च स्थानिवत्त्वाप्रवृत्त्या तन्न स्यात्। तत्र सुवित्यक्तपरिमाणग्रहणे तन्न्यायाप्रवृत्तेः नि
रपि पाठस्तु युक्त एवातः तत्र सामान्यतस्तदसिद्धिर्नोक्ता। कार्यकाले तु सुबंतत्वस्य शास्त्रीयत्वेन औटत्ति सुप्त्वस्य
स्थानिसंबंध्यल्धर्मत्वेन च स्थानिवत्त्वाप्रवृत्त्या तदसिद्धिरेव॥ यद्यपि अकडाराधिकारस्थभपदसंज्ञादि।
विषयेयथोद्देशएवेत्युक्तं तथापि तत्संज्ञादयप्रसक्तावेव तत्रैवातिप्रसंगात्। प्रकारांतरमपि तत्रैव निरूपि।
तं वस्तुतइदं सर्वं प्राचीनरीत्या। स्वमते उभयत्र आश्रयणेपि तत्स्वीकारेणाभीयादित्यत्र व्यपवर्गाभावेनोपसर्गा
त्परस्येणोः भावेन दोषाभावेपि प्रकृते यस्माद्विहितस्तदादितदंतत्वस्य तेन लाभे न पदत्वाक्षतेः। भाष्ये उभयत्र
आश्रयणे नांतादिवदित्युक्तेस्त्वस्तु सकदेशिन इति स्पष्टं शेखरादौ। स्वमते अवतरणं तु चिकीर्षति विदृत्सती
त्यादौ उ-रद विहलादिः शेषः सत्यत इतीत्वं च न स्यात् द्विरुक्तधातुपूर्वभागत्वाभावेन पुनरभ्यासत्वाप्रवृत्तेः।

शकरी॰ अशास्त्रीयत्वेनस्थानिवत्त्वाप्रवृत्तेरितिबोध्यं।गुडोदकमित्यत्रानेनइकारान्तेपूर्वपदत्वेनएकादेशविशिष्टेउदक।
२८ शब्दत्वेनोदकेकेवलेइतिस्वरसिद्धिर्नास्यफलं।उपसर्गस्येतिलत्वेक्षायतेइत्यत्राचःपरस्मिन्नितिस्थानिव[illegible]त्त्वा
त्रापिव्यपवर्गस्यसुलभत्वात्।अजीगणदित्यत्रईचगणइत्यपिनासाधारणंतत्रैतत्सामर्थ्येनापिइत्वस्यलाभमिति
बोध्यं।अर्थस्यायमार्थः।समाजःसमुदायस्तेनग्रस्तंग्रथितंअर्थसंबंधिसमुदायांतर्भूतमित्यर्थः।अवलव्यवहारः।
अवलप्रयोजकोव्यवहारइत्यर्थः।अनुकरणमिति।अष्टाध्याय्यांतांतदाव्यच्छब्दस्या[illegible]दर्शनादितिभावः।एक
देशविकृतन्यायेनदीव्यतिशब्दैकदेशस्यतदर्थबोधकस्यदीव्यच्छब्दस्योच्चारणमित्यर्थः।यथाश्रुतंतुनसाधु।
अनुकरणस्यशब्दपरत्वेनार्थस्यावधित्वंनस्यात्इतिस्पष्टमुद्यो[illegible]ते।किमर्थमिदमितीति।एवंहिलाघवात्प्राग्दीव्य
तेरणइतिवक्तव्येतत्त्यक्त्वाप्राग्दीव्यतइतिनिर्देशःकिमर्थइत्यर्थः।ननुमास्तुसूत्रेऽनुकरणतातान्तस्यैवावधित्वम।
स्त्वितिचेन्न।अवध्यवधिमतोःसाजात्यमितिनियमादर्थस्यइष्टमवधित्वंनस्यात्।तथाचातइञित्यत्रापिञोःपर्या
येणविधानंस्यादित्याशयात्।अनेनैकदेशविकृतोप्यर्थबोधकएवेतिसूचितमितिबोध्यं।विकृतावयवेति।अत। राम॰
एवमघवतःराजकीयमित्यादौसंप्रसारणाल्लोपौन।अन्यथानेनन्यायेनानंतत्वात्।श्वयुवेतिसंप्रसारणंस्यात्। २८

राज्ञःकचेतिकादेशेप्यनंतत्वादल्लोपेनइतिस्यात्।मघवत्शब्दांदसत्वेनानइत्यपकर्षणेफलाभावेनचतत्रनदोषइ
त्यन्ये।अतःपरिमाणइति।लोकेदृष्टस्यपरिमाणत्वस्यात्रासंभवाच्छब्दानुपूर्वीविशेषरूपंगृह्यते।उक्तयुक्तेरिति।
यथालोकेपंचद्रोणादिशब्दानांपरिमाणार्थवाचकानांन्यूनाधिकयोःप्रवृत्तिस्तेषांपरिच्छिन्नपरिमाणार्थ।
कत्वाद्दुरुपपादा।एवंसर्वाद्यानुपूर्वीविशेषोपादानेनक्रियमाणसर्वनामसंज्ञान्यूनेधिकेवासर्वकादौयत्नं
विनादुरुपपादाइत्युक्तयुक्तेरित्यर्थः।नन्वेवमंतादिवच्चेत्येतत्प्रयोजनेगुडोदकमित्यादावुदकेकेवलेइतिपूर्वप
दांतोदात्तत्वमनेनदकशब्दस्योदकशब्दत्वमाश्रित्यसाधि तंभाष्योक्तंविरुध्येत।तत्रोदकइत्यक्तपरिमाणाग्रहणात्।
प्राग्दीव्यतइत्यक्तपरिमाणग्रहणेनतज्ज्ञापकपरंभाष्यंचविरुध्येत।भाष्यांतरंचनादृशंनोपलभ्यतएवेत्यतआह॥
एतदिति।तत्रहिपंचद्रोणादिदृष्टांतेनउक्तस्यलेतदभावमाशंक्यज्ञापकेनतदेकदेशभूतइतिन्यायेनसमाहितांयदि
तत्रैतत्प्रवृत्तिस्तर्हिंअधिकगङ्गादिसत्वेपिशुनश्वत्वबदकजधिकस्यसर्वकस्यसर्वशब्दत्वमक्षतमेवेति[illegible]प्यासं
गतिरेतत्सत्त्यातदाकूतमितिभावः।एतेनानेनन्यायेनपूर्वपदत्वभाष्याभिप्रेतंनतूदकशब्दत्वमितिनतद्विरोधइ
त्यपास्तं।अंतादिवच्चेत्यत्रपूर्वांतवत्त्वेपितत्प्रयोजनस्योक्तत्वेनतदभिप्रेतत्वस्यसुमेरुशृङ्गी ढत्वात्।उकारांतत्वेपूर्व

शांकरी पदत्वे उकारस्यैतदापत्त्या फलभेदापत्तेश्च परत्वादुदात्तत्वे एकादेशे तत्सिद्धेस्तदुत्तरभाष्ये एवमप्युक्तत्वेन तस्यैकदेश्यु
२९ क्तित्वाच्च। अत एव तत्र याश्रयणं। अन्यथाऽनेनैव गतार्थत्वात्तदनर्थकमेव स्यात्। यदागमा इति तु न गतार्था आग
मस्याविकारत्वात्। अत एव लोपागमवर्णविकारज्ञो हीति भाष्ये आगमस्य विकारात्पृथगुक्तिः। घुसंज्ञायामुक्तपरि
माणत्वाच्च। एवं च येन विधिरिति सूत्रभाष्यविरोधेनोदके केवल इति सूत्रभाष्यमेकदेश्युक्तिज्ञापनपरं भाष्यं त
न्यायेन दीव्यतीत्येतत्स्वरूपालाभेऽपि देवनकर्तृरूपार्थलाभेन तु योजनमिति बोध्यं उक्तं च खलास्तु येन विधिरिति सूत्र
भाष्यमेकदेश्युक्तिरेवोक्तहेतोः। अंगसंज्ञासूत्रे अंगसंज्ञायामप्युक्तपरिमाणत्वस्य भाष्ये उक्तत्वेनाचः परेति
सूत्रे आयस्यावित्यत्रानेनांगत्वातिदेशकरणेऽतद्विरोधाच्च। लोकन्यायेनैव सिद्धेर्ज्ञापकानुधावनपरभाष्यविरोधा
च्च। तदेकदेशभूतमिति न्यायेन लोके आगमस्यापि विकारव्यवहारसत्त्वाद्यदागमा इति न्यायोऽपि मास्तु। अनेनैव ग
तार्थत्वादित्यपरमनुकूलमित्याहुः। विकृतानलरूपेति। तेन यशःशशशब्दादिस्मिचिटिलोपे अनेनासंतत्व लाभे
तस्यानिवृत्त्वेन तत्त्वमाश्रित्यासायामेधास्रजो विनिरिति विनिसिद्धिः। आभीयादितीति। अत्र त्वयं तत्त्वं सर्वत्रादादि राम
प्रकरणेऽशेखरे स्पष्टं। नन्वेवं भिंधीत्यत्रेति। नन्विदमनुपपन्नं तद्भावेहेतोरनुक्तत्वात्पूर्वं सकृद्गतिन्यायोपन्यासा। २९

सस्यैव युक्तत्वात्। किंच तातङ्भावपक्षे भिंधीत्यत्र धिभावस्य स्थानिवत्सूत्रे भाष्ये साधितस्यासंगतिस्तत्र ध्यादेशे
पि तातङ्प्रवृत्तौ तदसंगतिरेव। किंच तातङ्धिभावयोर्योगपद्यासंभवेन परत्वात्तातङ्यपि तातङ्धिभावयोर्यौ
गपद्यासंभवेन को विरोध इति चेत्। अयं भावः। विप्रतिषेधसूत्रस्य नियमार्थत्वे वृक्षेभ्य इत्यादौ स्वीयस्वीयोद्देश्य
तावच्छेदकाक्रांतायाः सुपि च बहुवचने झलीत्यनयोः प्राप्तयोः पर्यायतायां विप्रतिषेधे परमित्यनेन पूर्वशास्त्र
स्य झलादिबहुवचनविषये विषयत्वेनाभावो बोध्यते। अन्यथा शास्त्रद्वयप्रामाण्याद्विकल्पापत्तिः। ईयत्तु रित्या
दावपि द्वित्वसंप्रसारणयोः प्राप्तयोः परं संप्रसारणं भवतीत्यनेनोपदेशिवद्यजादिधातोर्द्वित्वाविषयत्वं बो
ध्यते। तिसृणामित्यत्रापि त्र्यर्थकत्रिशब्दस्य त्रयादेशाविषयत्वं। एवं चानायासेनैव सकृद्गतिन्यायः सिद्धः। तेना
शीरर्थस्य हेर्धिविषयत्वेन भिंतादित्यत्र तातङा बाधितो धिः। भिंधीत्यत्र तदभावेन स्यादिति। एवं च पुनः प्रसंगन्याये
न तत्प्राप्तानां पर्यसंकोचस्याभावो बोध्यत इति यत्नलभ्योऽयं। तेन पूर्वं तदनुक्तावपि न क्षतिरिति सूचितं। तच्चैवं भिं
तादित्यत्रापि ध्यादेशापत्तिस्तद्विषयकतातङ्शास्त्रोपप्लवानर्थक्यापत्तेः। तेन तद्विषये सकृद्गतिन्याय एव सम्यगनु
सारादाश्रियत इति सूचितं। विकल्पस्याभावांशेऽपि तात्पर्यसत्त्वेनोभयत्र स्पकत्वादित्युद्घोषस्याप्युक्तमेव बीज

शांकरी· मन्यथा विभाषा श्वेरित्यत्र भावाभावाभ्यां संप्रसारणस्य पाक्षिकत्वे लब्धे न वेति विभाषेति सूत्रस्य लघ्व्याद्गुरोर्धर्मंगीकृत्य ।
३० प्रत्याख्यानासंगतेः । ममतु वचिस्वपीत्यस्य शुशुवुरित्यादौ चारितार्थ्ये न विभाषा श्वेरित्यस्य शूशावित्यादौ चारितार्थ्येऽप्युभा
भ्यां सूत्राभ्यां लिट्यनंतरे कित्यनंतरे संप्रसारणं साधित्यर्थकाभ्यां संप्रसारणस्यैव विधानेन विरोधाभावान्नियमार्थक ।
विप्रतिषेधसूत्राप्रवृत्त्या चारितार्थ्यात् । अत एवाग्रे वक्ष्यति एतन्नियमवशादेव तल्लक्ष्यविषयकपूर्वशास्त्रानुपप्र
वृत्त एवेति । कैयटोक्तप्रकारस्तु न युक्त इति स्पष्टं गदायां । द्वयोः कार्ययोरिति । नावश्यं द्विकार्ययोग एव विप्रतिषेधः किं
तर्हि असंभवोपीति भाष्ये द्विकार्ययोगत्वाभावे केवलेप्यसंभव इति हितेनोक्तं । तथा सुपि च बहुवचने झल्येदित्यनयोः
वृक्षेभ्य इत्यादौ युगपदसंभवः यञादिसुप्यनंतरे दीर्घः साधुः । झलादिबहुवचनांतरे एकारः साधुर्भवतीत्यर्थात् ।
यद्यपि विधेयानिपात्यात द्विशेषणत्वं दुरूपपदं । एवं च सुप्यनंतरस्यादंतस्य दीर्घ इत्याद्यर्थे युगपत्संभवेन ना ।
स्ति विरोध इति शक्यं नेवर्कुं तथापि शब्दानां नित्यत्वाद्व्याकरणस्य साध्वनुशासनतया साधुत्वस्यैव विधेयत्वेनैव ।
मेवोचितमिति स्पष्टमिको गुणेत्यत्र विवरणे । शिड्यादित्यत्राप्येवमेव । यद्यपि तत्रादेशात्पूर्वं तदुत्तरं वास्यानित्वत्वादि एम.
स्यैव तन्निमित्तानन्तर्येन तथापि तत्प्रवृत्त्यवच्छेदककाले विरोधोस्त्येवेति बोध्यं । अत्रेदं बोध्यं । अन्यतरस्य तु निमित्ता ३०

नंतर्यसत्त्वेन्यतरस्य तदसत्त्वे नास्ति विप्रतिषेधः । यथा राजेत्यादौ दीर्घस्यैतन्निमित्तासत्वेपि हल्ङ्यादिलोपस्य तत्सत्त्वे
न विप्रतिषेधः किंतु प्रतिपदोक्तत्वाद्दीर्घस्यैवेति स्पष्टं शब्दशब्दरत्ने । यत्राप्येकमेव कार्यमुभाभ्यामपि बोध्यते तत्रापि
विरोधाभावान्न विप्रतिषेध इति स्पष्टं संबुद्धौ शाकल्यस्येति सूत्रे शब्दरत्ने । यथानंतरे नामि यञादौ सुपि च दीर्घः ॥ सा
धुर्भवतीत्यर्थकयोः सुपि च नामीत्यनयोः रामाणामित्यत्र प्रवृत्तयोर्नास्ति विरोध इति तत्रैव शेखरे स्पष्टं । विप्रतिषे
धशब्दस्य विरोधार्थकत्वात् । परस्परलब्धावकाशयोरिति फलितार्थपरं । अन्यतरानवकाशत्वेऽपवादत्वापत्तेः । एवं
भिंधीत्यत्रेति । भिनद्हि इत्यत्रेत्यर्थः । भिंत्तादिनिलक्ष्ये इति यावत् । यथाश्रुतेत्वसंगतिः स्पष्टैवेति बोध्यं । राधते इत्या ।
दाविति । आर्धधातुके नियमस्य चानशि विकरणस्य च चारितार्थ्येन परत्वमिति भावः । ननु परत्वादित्ययुक्तं । कृता
कृतप्रसंगित्वेन विकरणानां नित्यत्वादिति चेन्न । अनुदात्तङित इत्यादीनामिदानीं नियमार्थत्वेन एधते इत्यादावनुप
पत्त्यभावेपि एधतीत्यादिनिवृत्तिमात्रफलकत्वेन तत्र च नियमशास्त्रप्रवृत्तौ तद्रूपस्यैवाभावेन विकरणात्प्रा ।
ग्वाकृताकृतप्रसंगत्वाभावात् । तङ्विधानमिति । ननु तङ्पि तेप्यचारितार्थ्यमेव विकरणात्प्रागेव नियमप्रवृत्त्यात्त
दानींस्य परत्वाभावेन नियमेबाधायोगात् । न च तदुत्तरं स्य परत्वसंभवेन परिभाषामात्रबोधनेन चारितार्थ्येन

सामर्थ्याभावेपितत्रकौंडिन्यन्यायेनापवादस्योपजनिष्यमाणत्वेतद्बाधेपूर्वविकरणेपुनःप्राप्तस्यनियम
स्यबाधनेनचरितार्थत्वं तदितिवाच्यं।तत्रकौंडिन्यन्यायेनबाधितस्योत्सर्गस्यपुनरप्रवृत्तेःसामान्यशास्त्रेणोभ
यसिद्ध्यापुनरपिवैयर्थ्यस्यतदवस्थत्वात्।अतएवेदृशेविषयेप्रथमयोः पूर्वसवर्णइतिसूत्रस्थकैयटो
क्तरीत्यान्यायानाश्रयणमतएवस्यतासिभ्यांतिवादिबाधोनएवंचकथंचारितार्थ्यमतआह।विषयसप्तमी
ति।एवंचनियमबाधनेनचारितार्थ्यंस्पष्टमितिभावः।विषयसप्तमीत्वस्वीकारेगौरवमत्रपक्षेऽतोलाघ।
वादाह।विकरणाव्यवधानेपीति।एवंनित्यांतरंगयोरिति।अनयोःपरापेक्षयाबलवत्त्वमपियौगपद्यासं
भवएवबोध्यमित्यर्थः।विप्रतिषेधसूत्रेणपरस्यतत्रैवबलवत्त्वबोधनेनतत्रानयोरर्थोयौगपद्यासंभवास्ये
वेतिभावः।अनयोःपरस्परबाधकत्वेइत्यर्थइतितुनयुक्तंमानाभावात्।धनंवनमित्यत्रार्थवत्पदाभावेऽ
तरंगत्वादवयवानांप्रातिपदिकत्वेसुपिचकृतेसमुदायस्यप्रातिपदिकत्वात्तदवयवत्वेनसुपोलुगितितत्र।
सुपःश्रवणमित्यर्थवत्सूत्रस्थशब्दरत्नविरोधश्चेतिदिक्।असिद्धंबहिरंगमंतरंगे।अंतःशब्दार्थमाह।मध्येइ
ति।अधिकरणशक्तिप्रधानस्याप्यंतःशब्दस्यबहिःशब्दस्यचशक्तिमत्परत्वेनभूतशब्देनगतिसंज्ञस्यतस्य



समासेनांतर्हितशब्देनवाबहुव्रीहिः।तत्रमध्यत्वस्यसापेक्षत्वादाह।बहिरंगेति।निमित्तसमुदायेत्यध्याहारल।
भ्यं।एवंचयदीयनिमित्तसमुदायांतर्हितांगकंशास्त्रंतदंतरंगं।एवंयदीयनिमित्तसमुदायाद्बहिर्हितांगकंशा
स्त्रंतद्बहिरंगमितिवाच्योर्थइतिनान्योन्याश्रयः।मूलंतुफलितार्थपरमितिबोध्यं।अतएवेति।अंतरंगत्वात्त्र
यादेशेतस्यस्थानिवत्त्वात्त्रिशब्दत्वेनत्तिस्रादेशप्राप्तावपितन्नेपिपूर्ववदंतरंगत्वान्नुटिदीर्घेचलक्ष्येलक्षण।
स्येतिन्यायेनत्तिस्रादेशेपिदीर्घाप्राप्त्यानिषेधवैयर्थ्यस्पष्टमेवेत्यर्थः।एतेनस्थानिवत्त्वात्तिस्रादेशेपि अंतरंग
दीर्घेतस्यासिद्धत्वेनतद्वैयर्थ्यमित्यपास्तं। असिद्धत्वस्याहार्यारोपबोधकत्वेनकार्यस्यस्थानिवुध्यादेशप्रवृ।
त्यानिषेधस्योज्जीवनात्। विकारकृततत्वलक्ष्यभेदस्यानाश्रयणस्यान्यत्रप्रपंचितत्वादितिबोध्यं।अपरनिमित्त
कत्वेनेति। अतएवपचावेदमित्यादौएत्वंनःचुंचुप्रणयोश्चुटूइत्वंचनेतिभावः।इदमंतरंगत्वंचनापूर्वतदी
यनिमित्तांतर्हितनिमित्तत्वेनतत्त्वंबोध्यं।अतएवहेज्ञानेत्यादौनित्यत्वात्पूर्वरूपेकृतेलोपसिद्धिरन्यथापरनि।
मित्तत्वेनांतरंगत्वाल्लोपेऽतोगुणइतिपररूपेतन्सिद्धौभाष्योक्तव्यधिकरणान्वयस्यतत्रत्यशेखरस्यचासंगतिः।
एसिद्धइत्यत्रतदादेरित्युपस्थितावपितदीयनिमित्तांतर्हितत्वेनतत्त्वमक्षतं।संबुद्धौपरत्वाद्गुणोभवतीत्युक्ते

शे॰कौ॰ ३२

कस्मादितिनियतत्ताकांक्षायामुपस्थितत्वादंगादित्यस्यावधित्वेनान्वयेन सप्तम्यंतपंचम्यंतयोरपि निमित्तत्वसत्त्वात्॥
ह्रेर्विघ्ने इत्येतदवतरणोक्तशेखरविरोधोपीतिध्येयं। अपरे तु तत्सूत्रस्यानिवत्सूत्रस्थभाष्यप्रामाण्याद्वर्णग्रह-
णेपि तत्र वृत्ते रंगीकारेण लाक्षणिकत्वा देवपचावेदमित्यादावदोषः। षः प्रत्ययस्य चुटू इत्येकयोग एव कर्तव्ये पृथग्
योगकरणेन उत्तरस्य क्वाचित्कत्वबोधनेन चकारस्य प्रत्ययादित्वभावाय प्रश्लिष्टयकारवैयर्थ्येन चुंचुवाद्याव
प्यदोषेण नेह शांतरंगत्वस्य फलं भवतीत्याहुः। तस्यां हि सत्यां बहिरंगसंप्रसारणस्यासिद्धत्वाल्लघूपधगुणेनस्या
दिति॥ नन्वत्त एव बहिरंगत्वं दुरुपपादं। संज्ञाकृतत्वस्य कैयटोक्तस्यानुपदं सूचितत्वेन भसंज्ञायाश्च एव स्व श्व।
योरित्यादौ शसाद्यनपेक्षत्वेनाक्षिप्तस्य शाब्देऽन्वयाभावस्य स्वयं सिद्धांतितत्वेन च परस्परानिमित्तत्वाश्रयणेनाना
भावस्यानुपदोक्तत्वेन च भस्य दसंज्ञाविषयेयथोद्देशस्यैवाश्रयणेन चायुक्तमेतदिति चेन्न। भाष्य एकदेशस्थत्वो
क्त्या संज्ञापरिभाषयोरैक्यस्यान्यत्र स्पष्टतयैकवाक्यत्वलाभेन बहिर्वृत्तशसादिनिमित्तत्वेन तत्त्वस्य सुलभत्वात्।
स्यत्वविशेषभाष्यप्रामाण्येन परस्परानिमित्तत्वांगीकारात्। अत एव पदद्वयनिमित्तकसमासनिमित्तत्वेन लुको
बहिरंगत्वमित्यंतरंगानपीतिज्ञापनपरसकलभाष्यादिसंगतिः। अतएवाभ्यासनिमित्तनिमित्तत्वेन ह्रस्वस्य

राम॰ ३२

बहिरंगत्वमिति ह्रस्व इति सूत्रे भाष्ये इयङुवङोश्च बहिरंगत्वमिति वार्णादांगमिति ज्ञापनपरत्वाश्वानिति सूत्रे च भाष्ये स
ष्टं। एतेनानेन संज्ञाकृतत्वं सूचितमित्यपास्तं। त्वदीयकैयटोक्तरीत्या गुणस्यैव बहिरंगत्वेन एवमप्यनुप[illegible]स्थान
चैवमपि परनिमित्तत्वस्य उभयत्र तुल्यत्वेन कथं तत्त्वं संप्रसारणीयनिमित्तानंतर्वृत्तनिमित्तत्वस्य गुणेऽस[illegible]वा
वेदमित्यादौ तु प्रत्ययग्रहणेनोपस्थितत्तदादेः परस्य विधीयमानस्यैत्वस्य गुणीयपदद्वयनिमित्तांतर्वृत्तनिमित्त
कत्वसत्त्वेन न दोष इति वाच्यं। भसंज्ञकांगावयवस्य निर्दिश्यमानवाहावयवस्य यणः संप्रसारणमित्यर्थस्य वि।
श्वाद्यवयवयणस्तद्घ्रात्रुत्यर्थमावश्यकत्वेनांगत्वस्य च वाहांतस्त्वेन गुणनिमित्तस्य तदंतर्वृत्तत्वेन तत्त्वमित्याश
यात्। न चैवं षष्ठ्यंतस्य निमित्तत्वांगीकारे प्रागुक्तयेन विधिरिति सूत्रभाष्यविरोधः। तत्र हि उक्तशब्दमाश्रित्य गुणाद्।
त्यंतरंगत्वाद्गुण एव स्यादित्युक्तं। त्वदीत्या गुणेपि इगंतांगस्यार्धधातुकस्य निमित्तत्वेनोभयोः समत्वात् तदसंगति
रिति वाच्यं। अर्थवत्त्वे वस्यान्यादेशविश्रांतिरितिसिद्धांतेनानुमानिकस्यान्यादेशाभावस्य सति संभवे सर्वसत्त्वेन दि
उ इत्यस्यैव दंतादेश इत्यर्थलाभेन चास्य कार्यित्तयानिमित्तत्वाभावादित्याशयात्। प्रकृते तु न तथा सूत्रे उच्चार्यमा।
णस्य वाह[illegible]मानाभावेन तत्स्योपरंजकतयैव व्याख्यानस्योचितत्वेन का।

॥र्यत्वाभावात्। अतएव सन्यङोरित्यत्र सन्नंतस्योद्देश्यत्वेपि ऊर्णुनविषतीत्यत्र तु शब्दस्यैव।
द्वित्वरूपकार्यित्वेन संज्ञात्वनिमित्तत्वं सिध्यति। त्वदुक्तरीत्या षष्ठ्यंतस्य कार्यितया तद्घटकस्येसो नि
त्त्वाभावे द्विर्वचनेचीत्यत्र दशत्वेनोनद् संगतिरित्यलंकृतबुद्धिना ॥ इतिश्री शांकरीटीका समाप्ता

॥मिती श्रावनशुक्लसप्तम्यां ७ रविवासरे सम्वत् १९३५॥ः श्रीरामचंद्र॥

राम ११

